# उद्वाहचन्द्रालोकः ।

राजकीयसंस्कृतविद्यालयाध्यापक-

महामहोपाध्याय-

श्रीचन्द्रकान्ततर्कालङ्कारभट्टाचार्य्य-

विरचित ।

शेरपुरनगरस्थान्यतमभूस्वामिना

विद्याविनोदेन

श्रीहरचन्द्रचतुर्धुरीणेन प्रकाशितः ।

---

# UDVAHA CANDRĀLOKAH.

A TREATISE ON THE

MARRIAGE RITES OF THE

**HINDUS**

*According to the Dharmashastras.*

BY

MAHAMAHOPADHYAYA

## CANDRAKANTA TARKALANKARA

Professor Sanskrit College

*CALCUTTA*

PUBLISHED

BY

**SRI HARACANDRA CAUDHURI VIDYAVINODA**

*Zemindar*

TOWN SHERPUR

1897.

कलिकाता-राजधान्याम्

युगलकिशोरदासस्य लेनस्य २३ संख्यकभवने

कालिकाख्ययन्त्रे

श्रीशरच्चन्द्र चक्रवर्त्तिना मुद्रितः।

# विज्ञापनम् ।

पूज्यपादमहामहोपाध्यायरघुनन्दनभट्टाचार्य्या वन्द्यघटीवंशं पूर्व्ववङ्गप्रदेशं च जन्मनाऽलङ्कृतवन्तः। अद्यापि पूर्व्ववङ्गप्रदेशे तद्वंश्याः सन्ति। परतस्तु तेषां निवासो नवद्वीपे जात इति किंवदन्ती। कयाऽपि पुण्यसम्पदा तैर्जन्मनाऽलङ्कृते वंशे प्रदेशे चायमपि जनः समजनिष्ट। ते खल्वस्मत्समगोत्राः पूर्वतना इत्येतावताऽपि मत्पूजनीयाः। तेषां पाण्डित्यन्तु प्रख्याततममिति न तत्र किञ्चिद्वक्तव्यमस्ति। तन्निर्मितस्मृतिनिबन्धा एव तेषां कीर्त्तिस्तम्भवदद्यतिष्ठन्ते। ते खल्विमे निबन्धाः विपश्चिद्भिरादरातिशयेन पठ्यन्ते पाठ्यन्ते च। तदनुसारेणैवेदानीं वङ्गदेशीयानां धर्म्मानुष्ठानानि प्रायः सम्पद्यन्ते। किं बहुना, स्मृतितत्त्वविसंवादि मुनिवचनमपि सूरयो नाद्रियन्ते।

एवं गते मादृशस्याल्पमतेः किञ्चिज्ज्ञस्य स्मृतिनिबन्धप्रणयनाभिलाषो यद्यपि हास्यायैव, तथापि प्रारब्धवशादपथ्यसेवनादिष्विवात्रापि प्रवृत्तिर्न शक्या निवारयितुम्। कृतश्रमेण मया यानि स्मृतिवाक्यान्युपलब्धानि स्वमत्यनुसारेण च तेषां यादृशोऽवबुद्धोऽर्थस्तदेवात्रोपनिबद्धम्। यः खल्वत्राल्पमतेर्मम प्रमादो जातस्तत् सर्वं धीमद्भिरहं कृपया बोधनीय इत्यसकृत् कृताञ्जलिः प्रार्थये। सूक्ष्ममतिरपि न किल्नैकः सर्व्वान् विशेषान् शक्नोत्यवधारयितुं, कैव कथा मादृशस्याल्पबुद्धेः. वादकथया किल शास्त्रतत्त्वं परिस्फुटीभवति। तद्विपश्चिद्भिरनुग्रहबुद्धा वादरीत्यैवाहं बोधनीयः।

अथाचानन्यगतिकतया गुरूणां तेषां मते दूषणमुद्भावितं, तद्धी: क्षन्तव्यम्। यः कश्चिदर्व्वाग्दर्शी स्वमतिबलेन शास्त्रार्थमवधारयितुं यतते तस्य च योऽर्थः शास्त्रस्य प्रतिभासते प्रचरद्रूपे चार्थान्तरे यदसामञ्जस्यम्, अवधारितस्यार्थस्य वैशद्याय तत् सर्वं तस्यावश्यमुपनिबद्धव्यं भवति। दृश्यते खल्ववधारितस्यार्थस्य निर्म्मलत्वाय तद्विपरीतस्य मतस्य प्रत्याख्यानं सर्व्वत्र। तैरपि गुरुभिस्तद्गुरूणां मतमतएवानेकशः प्रत्याख्यातम्।

अस्माभिरपि न प्रद्वेषबुद्ध्या दर्पेण वा तदाचरितं, किन्त्ववगतार्थवैशद्यायैव। धर्म्मशास्त्रञ्च मूलं धर्म्माधर्म्मयोर्न निबन्धकर्त्तॄणां मतम्। तद्यदि विपरीतं शास्त्रं स्फुटमुपलभ्यते तदा निबन्धॄणां मतमनपेक्षणीयमेव भवति शास्त्रैकशरणानाम्। अनुसरणीयं च शास्त्रम्। आचार्य्याधीनो भवान्यत्राधर्म्माचरणात्, तेन यायात् सतां मार्गमित्यादिना मुनिभिरेवायमनुशिष्टोऽर्थः। न च सर्व्वाणि शास्त्रवाक्यान्येकेनार्व्वाग्दर्शिना शक्यान्युपलब्धुम्। तद्येन यावन्ति शास्त्रवाक्यान्युपलब्धानि पक्षपातमुत्सृज्य धर्म्मरक्षार्थं तेन तावतामुपनिबन्धनं कर्त्तुमुचितम्। तत्सर्व्वं किलोपलभ्य सूक्ष्ममतयो धर्म्मतत्त्वं निर्णेष्यन्तीति। अतएव ममायमुद्यमः। सोऽयं कस्यापि कमप्युपयोगलेशमासादयेच्चेत्, तर्हि परिश्रमोऽयं सफलो भवेत्। श्रीमानतुलचन्द्रगोस्वामी प्रूफपत्रदर्शनादिनात्र साहाय्यमकरोत्। स चिरजीवी भूयादिति शिवम्।

कलिकाता राजकीयसंस्कृतविद्यालय। शकाब्दाः १८१८। फाल्गुने मासि। | संग्रहकारस्य श्रीचन्द्रकान्तदेवशर्म्मणः।

## शुद्धिपत्रम् ।

| पृष्ठ | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | ७ | दास्यन् | धास्यन् |
| २ | १० | गोतमे | गौतमे |
| ७ | २० | भार्य्या | भार्य्यां |
| १० | ११ | प्रतिग्रहा | प्रतिग्रह |
| १० | २४ | ऽवराः | वराः |
| १५ | २३ | प्रवेर्त्तन्ते | प्रवर्त्तन्ते |
| १६ | १७ | पूर्व | पूर्वं |
| ४६ | ११ | ब्रह्मायाज्ञानिने | ब्रह्माय ज्ञानिनं |
| ५४ | २० | नादुष्टा | नादुष्टां |
| ७३ | ८ | अतिषातिषु | अतिपातिषु |
| ७६ | ११ | मित्रोच्चोपय | मित्रोच्चोपचय |
| ८० | २४ | तुशब्दो | तुशब्देन |
| ११६ | १४ | प्रयोगेपदेश | प्रयोगोपदेश |
| १३७ | ११ | परिविश्नो | परिविष्टो |
| ” | २० | शव्द | शब्द |
| १३८ | २ | कुर्या | कुर्य्या |
| ” | ५ | निविष्टे | निर्विष्टे |
| १४२ | ६ | नाना | माना |

| पृष्टे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ” | १३ | तथेवेति | तथैवेति |
| १४७ | ८ | वार्षिकं | वार्षिकं |
| १४९ | २१ | कनिष्ठन | कनिष्ठेन. |
| १५१ | ९ | अतएवाभि | अतएवाति |
| ” | १० | भदा | भेदा |
| १६६ | ६ | कृत्तमे | कृत्तमै |

# क्रोड़पत्रम् ।

७ । १७ पंक्तौ—

असवर्णाविवाहस्य जघन्यत्वान्न तत्र साक्षात् पाणिग्रहणं किन्तु गृहीतशरादीनामतएव वा तस्य जघन्यत्वमित्यवधेयम् ।

इत्ययमंशो निवेशनीयः ।

१६ । ४, ५, ६ पंक्तौ—

तदभिप्रायेणायं पृथङ्निषेधः । मातृष्वसृदुहितृणां पितृष्वसृ दुहितृणाञ्च दृष्टान्तविधया तत्रोपन्यासः । पितृष्वसृदुहिता हि तैरपि न परिणीयते ।

इत्यस्य स्थाने,—

एवं क्वचिद्देशे केचिन्मातृष्वसृहितरं पितृष्वसृदुहितरं चोद्वहन्तीति प्रदर्शयिष्यामः । तदभिप्रायेणायं पृथङ् निषेधः ।

इत्येवं पठितव्यम् ।

२१ । २१ पंक्तौ—

द्विजातिपदस्यानुपलक्षणत्वेऽपि पूर्व्वोक्तप्रबन्धेन शूद्रस्यापि सपिण्डावर्ज्जनसिद्धेर्न काचिदनुपपत्तिः ।

इत्ययमंशोनिवेशनीयः ।

४१ । २ पंक्तौ, तन्निष्पुरुषम् ।

इत्यतः परं,

स्त्रीमात्रशेषं वा ।

इत्ययमंशोनिवेशनीयः ।

५३ । १८ पंक्तौ —व्याख्येयम् ।

इत्यनन्तरं,

शूद्रविवाहस्याग्निसाक्षिकत्विध्यभावपक्षाभिप्रायेण वा वर्णनीयम् ।

इत्ययमंशोनिवेशनीयः ।

१६७ । २२ पंक्तौ,

वाग्विनिःसृतत्वमर्थानाम् ।

इत्यतः परं—

अथवा, स भूरिति व्याहरन् भूमिमसृजतेति, एतइति वै प्रजापतिर्देवानसृजतेति चैवमादिश्रुतेः । अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा । आदौ वेदमयी दिव्या यतः सर्व्वाः प्रवृत्तय इति । नामरूपे च भूतानां कर्म्मणां च प्रवर्त्तनम् । वेदशब्देभ्यएवादौ निर्ममे स महेश्वर इति चैवमादिस्मृतेः । शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्यामिति शारीरकसूत्राच्च शब्दपूर्विकायाः सृष्टेः प्रतिपादितत्वाद्वाग्विनिःसृतत्वमर्थानामवगन्तव्यम् ।

इत्ययमंशोनिवेशनीयः ।



# अनुक्रमणिका।

विश्वेश्वरं च पितरौ च गुरूंश्च नत्वा
तन्त्राणि चातिगहनानि मुहुर्विचिन्त्य।
श्रीचन्द्रकान्तधरणीविबुधोऽतियत्ना-
दुद्वाहनिर्णयमतिस्फुटमातनोति॥
मातः, सरस्वति, कृताञ्जलिरेष याचे
भूयः प्रणम्य भवदङ्घ्रिसरोजयुग्मम्।
संवीक्ष्य वाङ्मनसयोः कुरु मे प्रसादं
न स्याद्यथा मुनिवचस्तनयोः प्रमादः॥

पाणिग्रहणमुद्वाहः शरादिः क्षत्रियादिभिः।
उत्कृष्टवेदने ग्राह्यो विवाह्यादिविनिर्णयः।
सतानां पितृतः षण्णां तथा मातामहादपि।
विवाहे ग्रस्यते तावत् सप्तम्यूर्द्धमधस्तनो।
पितृतो मातृतश्चैव विवाह्या सप्तमी भवेत्।
षष्ठी च पञ्चमी चैव ज्ञेया कस्याञ्चिदापदि।
अत्यन्तासम्भवे मातुरुद्वाह्या स्याच्चतुर्थ्यपि।
ततोऽर्वाणुपयामस्तु सर्वथा शास्त्रगर्हितः।
स्मृत्या विरोधि प्रामाण्यमाचारस्य न विद्यते।
देशभेदेष्वनाचारभेदानां परिकीर्त्तनम्।
अपि मातुः सगोत्रायाः न विवाहः कलौ युगे।
पितृवत् पितृबन्धुभ्यो दत्तकादेश्च बीजिनः।
मातृवन्मातृबन्धुभ्यः सर्वेषां वर्जनीयता।
स्त्रीसापिण्ड्यविचारोऽधस्तनवत् पूर्वतोऽपि च।

गणनायां पुरुषवदन्तर्भावः स्त्रिया अपि।
बन्धुपक्षेऽप्येवमेव तत्पित्रादेस्तथैवच।
पितुः सगोत्रा नोद्वाह्या समानप्रवरा तथा।
तयोर्विचारः संक्षेपात्तथा गोत्रप्रवर्त्तकाः।
ऋषीणामेकगोत्राणां दिङ्मात्रेण प्रकीर्त्तनम्।
समानप्रवरत्वञ्च एकेनाप्यृषिणा भवेत्।
भृग्वङ्गिरोगणेष्वेव त्र्यार्षेयादिनिपाततः।
गोत्रप्रवरसद्भावविचारः क्षत्त्रवैश्ययोः।
संशये च तथाऽज्ञाने प्रवरस्य निरूपणम्।
गोत्रस्य चाऽङ्घ्रिजातस्य संस्कारस्य विचारणा।
शूद्रस्य धर्म्मकृत्येषु ब्राह्मणैरेव केवलम्।
मन्त्राः पौराणिकाः पाठ्या वैदिकास्तु न कुत्रचित्।
पञ्चयज्ञे तथा स्नाने पौराणा अपि नैव तु।
नमस्कारेण मन्त्रेण शूद्रः सर्वं समाचरेत्।
आद्यश्राद्धे तु पौराणा मन्त्राः पाठ्याद्विजातिभिः।
क्वापि शूद्रेण पौराणाः मन्त्राः पाठ्याः स्वयं न तु।
अविवाह्या सकुल्याऽस्य सगोत्रादौ न दूषणम्।
त्रिगोत्रान्तरितोद्वाहो द्विरेकपतने सति।
निर्णयोऽथ विमातुस्तु कुले वर्ज्यानिरूपणम्।
अन्यासामविवाह्यानां योषितां परिकीर्त्तनम्।
पितृनामा वरो नेष्टः पितृनामनिरूपणम्।
ग्रहणे मातृनाम्नास्तु जातं कर्त्तव्यनिर्णयः।
कन्यायाश्च वरस्यापि गुणदोषविवेचनम्।
उदक्योद्वाहचर्चा च तथा पुंस्त्वपरीक्षणम्।

क्षेत्रजाद्यादिभेदाश्च धर्म्माधर्म्मत्वनिर्णयः ।
ब्राह्माद्यैर्वर्णभेदेन विवाहानां गुणागुणौ ।
सकृद्दानविचारश्च कन्याया आसुरादिषु ।
गुणापित्तं भवेद्दानमुद्वाहसमयस्तथा ।
ऋतुमत्या विवाहस्य जघन्यत्वनिरूपणम् ।
न चावमान्या सा भर्त्रा पितुस्तस्याश्च शोधनम् ।
तद्दोषैरपि कर्त्तव्यं युग्माब्दादिविवेचनम् ।
मासर्त्तुपक्षचर्च्चा च दशमाद्वर्षतः पुरा ।
ग्रहशुद्ध्यादिकं, ज्यैष्ठे ज्येष्ठयोर्न च मङ्गलम् ।
योषितां जन्ममासे तु विवाहस्य प्रशस्तता ।
धर्म्म्येष्वेव विवाहेषु कालदोषप्रतीक्षणम् ।
विवाहः समयाशुद्धौ दशाब्दोर्द्ध्वं तथाऽऽपदि ।
दशमेऽब्देऽपि कन्यायाः लग्नतारेन्दुशुद्धितः ।
संस्काराणां तथाऽन्येषां तत्रापि करणं क्वचित् ।
कालाशुद्धेः पर्य्युदासो निषेधो वेति चिन्तनम् ।
गुरुभार्गवयोर्मौढ्ये शुभकर्मविचारणा ।
तत्र शान्तिविधानञ्च मिथ्यजातिरदूषणम् ।
वक्रातिचारेऽप्युद्वाहो गुरोर्गोचरशुद्धितः ।
रात्रौ दिवा चोपयामः पूर्व्वोक्ते तस्य मुख्यता ।
देशाचारादिवशतो ग्रहशुद्धिविवेचनम् ।
विवाहजन्मवर्षेऽत्र प्रतिकूलनिरूपणम् ।
तत्रारम्भात् परं मातृरजोयोगे तथैव च ।
बाल्यवैधव्ययोगे च क्रमाच्छान्तिनिरूपणम् ।
तत्र कुम्भादिकोद्वाहः पुनर्भूत्वं ततो न तु ।

मण्डपादिक्रिया नास्ति मण्डपो गोभिले मते।
वैवाहिकर्क्षे कर्त्तव्यं तत्संबन्धिगतादिकम्।
फलदानादिनक्षत्रं मृदाहरणमेव च।
अङ्कुरार्पणकर्म्माथ कन्यादानाधिकारिणः।
वृद्धिश्राद्धविचारश्च सुतसंस्कारकर्म्मसु।
आ विवाहात् पिता दद्यात् पितृभ्यः स्वेभ्य एव हि।
अभावेऽपि पितुस्तेभ्यश्छन्दोगानामियं स्थितिः।
आ स्नानात्स्यात्तथाऽन्येषां परतः स्वपितॄन् यजेत्।
पित्रभावे पितुर्वाऽपि संस्कार्य्यस्याथवा भवेत्।
श्राद्धं पितॄणामित्येतदन्येषान्तु मतद्वयम्।
संस्कारस्य च कर्त्तारस्तेषां चैवाधरोत्तरम्।
द्वितीयादिविवाहेषु पुत्त्रजन्मादिकेषु च।
पितामहादितः श्राद्धं जीवत्तातस्य शिष्यते।
पित्रादित्रिषु जीवत्सु तत्पूर्वेषामपीच्छया।
श्राद्धं कार्य्यं मुनीनां हि मतभेदोऽयमीदृशः।
पितामहादूर्द्धतनास्तथैव प्रपितामहात्।
देवताः स्युः पुराणोक्तं वृद्धिश्राद्धे मतद्वयम्।
वर्गाद्यजीवने वर्गः स एव त्यज्यते क्वचित्।
कर्त्तव्यं कन्यकादाने वृद्धिश्राद्धं स्त्रियाऽपि च।
तथैव पार्व्वणश्राद्धं श्राद्धदातुरसम्भवे।
मातृपक्षस्तु केषाञ्चिद्वृद्धिश्राद्धे विधीयते।
स्वशास्त्रोक्तप्रयोगान्ते मात्रादिनवदैवतम्।
श्राद्धान्तरं वा कर्त्तव्यं फलाधिक्यमभीप्सुभिः।
गोभिलीयैर्न तत् कार्य्यं योषिच्छ्राद्धविवेचनम्।

दर्शादावस्ति केषाञ्चित् पृथक् श्राद्धन्तु योषिताम्।
विवाहादिः कर्म्मगणो गर्भाधानादधस्तनः।
यस्तत्र श्राद्धमेकं स्यादाधाने प्रथमार्त्तवे।
वृद्धिश्राद्धे कालभेदा मात्रादिनवदैवते।
कर्म्मभेदात् कालभेदः प्रारब्धे सूतकं न हि।
तथा सम्भृतसम्भारे चापद्यपि तथैव च।
अनारब्धविशुद्धिश्च द्रव्ये सङ्कल्पिते तथा।
नाशुद्धिर्विद्यते विप्रैर्भोक्तव्यमविशङ्कया।
कन्याप्रदानं वरणं वरस्याहृतवाससः।
प्रशस्तत्वं माङ्गलिक्येषु न धार्य्यं गोपिचन्दनम्।
सौभाग्यतिलकं कन्याप्रदातोत्तरदिङ्मुखः।
ग्रहीता प्राङ्मुखश्चैव कन्या प्रत्यङ्मुखी भवेत्।
कन्याया वरणं तस्या दाने कल्पान्तरं तथा।
वरशाखोक्तकल्पेन मधुपर्कक्रियाविधिः।
कन्याप्रदानादिकाले प्रवरादेः प्रकीर्त्तनम्।
कन्याप्रदाने नोल्लेखः प्रवरस्य मतान्तरे।
वरवध्वोरेव गोत्रोल्लेखः पित्रादिकस्य न।
दानवाक्यं विरुद्धार्थं पौर्व्वापर्य्यमिहेच्छया।
वरवध्वोः कुलोल्लेखे, आश्वलायनशाखिनाम्।
आदौ वधूकुलोल्लेखः, परगामिफलेऽपि च।
ददानीति न वक्तव्यं किन्तु सम्प्रददे इति।
भुक्तवत्या भुक्तवतो विवाहो दातु.व तु।
उपवासः प्रदानात् प्रागग्निस्थापनमिष्यते।
पारस्करीये च नये गोभिलीये तथैव च।
विवाहात् प्राग्घोमकाले आगते होमकर्म्मणि।

---

•

# उद्वाहचन्द्रालोकः ।

उद्वाहनिरूपणम् ।

अथोद्वाहो निरूप्यते । तत्र मनुः । वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः । पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया । वैदिको वेदाध्ययनार्थो यः संस्कार उपनयनाख्यः स स्त्रीणां वैवाहिको विवाहसाध्यो विधिः । विवाहादेव तासामुपनयनसंस्कारो निष्पद्यते । एवञ्च विवाहस्योपनयनकार्य्ये विधानात्तन्निवृत्तिरर्थादवगम्यते । या च पत्युः सेवा उपचारः सैव तासां गुरुकुले वासः, यश्च गृहार्थो गृहकर्म्मणामन्नपाकादीनां करणं स एव तासामग्निपरिचर्य्या सायंप्रातःसमिदाधानरूपा । कृतोपनयस्य तावन्माणवकस्य गुरुकुले वासोऽग्निपरिचर्य्या च कर्त्तव्यतयोक्ता, स्त्रीणां विवाहस्योपनयनस्थानीयत्वे माणवकस्येव तासामपि गुरौ वासोऽग्निपरिचर्य्या च प्राप्नोतीत्याशङ्कानिरासार्थं पतिसेवादिकं तत्तत्स्थानपातित्वेनोच्यते । उपनयनञ्च नाम द्वितीयं जन्म । यदाह मनुः । मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने । तृतीयं यज्ञदीक्षायां द्विजस्य श्रुतिचोदनात् । पाणिग्रहणं स्त्रीणां द्वितीयं जन्मेत्याह विद्याधरीविलासकृत्यचिन्तामण्योः । पाणिग्रहणं नाम स्त्रीणां जन्म द्वितीयमिच्छन्ति । परिणेतुर्गोत्रमसौ यस्मादायाति तत्प्रभृति ।

तदेवं उपनयनस्थलाभिषिक्तो विवाहः स्त्रीणां द्वितीयं जन्मेति मनुवचनादवगतेर्विद्याधरीविलासकृत्यचिन्तामण्योश्च पाणिग्रहणस्य

तथात्वोक्तेः पाणिग्रहणं विवाह इत्यवगम्यते । किञ्च जायायां वा पाणिं जिघृक्षन् इति सूत्रयता गोभिलेन पाणिग्रहणकालेऽग्न्याधानं विहितम् । तत्सूत्रस्तु विवाहशब्देन तत्कालं निर्दिशति । एवञ्च पिता-पुत्रवचसोस्तात्पर्य्यपर्य्यालोचनयाऽपि पाणिग्रहणविवाहयोरैकत्वं प्रतीयते । तथा च गृह्यासंग्रहः । आधानस्य तु चत्वार उक्ताः कालाः पृथक् पृथक् । अन्त्या समिद्विवाहश्च विभागः परमेष्ठिनः । ब्रह्म-चारी वेदमधीत्यान्त्यां समिधमभ्यादास्यन् इत्यनेन सूत्रेण योऽयमा-धानकालो गोभिलेनोक्तः स इहान्त्या समिदित्युच्यते । यश्च,जायाया-वा पाणिं जिघृक्षन् इत्यनेन सुत्रेण, स विवाह इति । यस्तु, भार्य्यादि-रग्निर्दायादिर्वा इति गोतमेनाधानकालो दर्शितः, स इह विभाग-इति । यः पुनः, प्रेते वा गृहपतौ परमेष्ठिकरणमित्यनेन सूत्रेण गोभिलेनैवाधानकाल उक्तः, स इह परमेष्ठिन इत्यनेनाभि-धीयते । अतएव पाणिग्रहणकालीनोऽग्निर्वैवाहिकाग्नितया कात्या-यनेन निर्दिष्टः । तथा च कर्म्मप्रदीपः । वैवाहिकेऽग्नौ कुर्व्वीत सायं प्रातस्त्वतन्द्रितः । चतुर्थीकर्म्म कृत्वैतदेतच्छाट्यायनेर्मतम् ।

तथा गोभिलः । पुण्ये नक्षत्रे दारान् कुर्व्वीत । गृह्यासंग्रहः । पाणिग्रहणमन्त्रैस्तु नियतं दारलक्षणम् । तदनेन गोभिलेन दारकर-णोपदेशात् तत्सुत्रेण च पाणिग्रहणमन्त्राणां दारलक्षणत्वाभिधानात् पाणिग्रहणं दारकरणमित्यवगम्यते । दारकरणं सूत्रयित्वा तद्विव-क्षया पाणिग्रहणे पुरस्ताच्छालाया अग्निरुपसमाहितो भवतीति-सूत्रणाच्चैतदेवं प्रतिपत्तव्यम् । नारदः । विवाहादिविधिः स्त्रीणां यत्र पुंसां च कीर्त्त्यते । स्त्रीपुंसयोगो नामैतद्विवादपदमुच्यते । स्त्रीपुंसयोस्तु सम्बन्धे वरणं प्राग्विधीयते । वरणाद्ग्रहणं पाणेः संस्कारो-ऽयं द्विलक्षणः । तयोरनियतं प्रोक्तं वरणं दोषदर्शनात् । पाणि-

ग्रहणमन्त्रश्च नियतं दारलक्षणम्। विवाहादीत्यादिपदात् संग्रहणादेर्ग्रहणम्। तच्च, परस्त्रिया सहाकालेऽदेशे वा भवतो मिथः। स्थानसम्भाषणामोदास्त्वयः संग्रहणक्रमा इत्यादिना नारदेनैव सप्रपञ्चं परतो व्युत्पादितं, प्रयोजनाभावान्नेह प्रस्तूयते। स्त्रीपुंसयोस्त्वित्यादिना प्रथमतो विवाहोऽभिधीयते। तदत्र पाणिग्रहणं विवाह इति सुव्यक्तम्। प्रतिग्रहस्याकीर्त्तनात् स न विवाह इति च। वरणम्, अथ कन्यावरणं कन्यां परिणेष्यमाणो द्वौ चत्वारोऽष्टौ वरपितुराप्तान् प्रशस्ताकारकर्म्मणोऽनृचरा ऋजवः संतु पन्था इति प्रहिणुयादित्यादिना ग्रन्थेनाश्वलायनगृह्यपरिशिष्टकारेणोक्तम्। तच्च वरणं दोषदर्शनादनियतम्। तेन वरणानन्तरं कन्यादोषदर्शने तां जह्यात्, वृत्ते तु पाणिग्रहणे नैवमिति नियतदारलक्षणत्वं पाणिग्रहणमन्त्रस्य। वशिष्ठः। अद्भिर्वाचा च दत्तायां म्रियेतादौ वरो यदि। न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा। मन्त्रोपनीता पाणिग्रहणमन्त्रजन्यसंस्कारवतीति तत्त्वकृतः। अनेन प्रदानात् परतोऽपि पाणिग्रहणात् पूर्व्वं यदि वरो म्रियते तदाऽन्यस्मै सा देयेत्युक्तम्।

न च प्रदानं स्वाम्यकारणमिति मनुवचनेन वरस्य स्वाम्योत्पत्तेः कथमन्यस्मै तस्यादानमिति वाच्यम्। उत्सर्गस्यापवादेतरविषयत्वोपपत्तेः। प्रदानमिति प्रशब्दस्यार्थवत्त्वोपपत्तेश्च। न च वाग्दानव्यावर्त्तकतयैव तस्यार्थवत्त्वमिति वाच्यम्। तावन्मात्रपरत्वे प्रमाणाभावात। तस्माद्वाग्दानवदेतद्व्यावर्त्तनेनापि तस्यार्थवत्त्वं वाच्यं विशेषहेतोरभावात्। किञ्च भार्य्यात्वार्थं किल सा दत्ता भार्य्यात्वञ्च पाणिग्रहणात् तस्मिंश्चानुत्पद्यमाने प्रदानमपि निवर्त्तते, यद्वि यदर्थं दत्तं तस्यानिष्पत्तौ तद्दानस्य निवर्त्तनीयत्वाभिधानात्। तथा च

मनुः। धर्म्मार्थं येन दत्तं स्यात् कस्मैचिद्याचते धनम्। पश्चाच्च न तथा तत् स्यान्न दत्तं तेन तद्भवेत्। अन्यस्मै तस्या दानोपदेशा- च्चैतदेवं प्रतिपत्तव्यम्।

पुनर्मनुः। पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम्। तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे। तेषां पाणिग्रहणमन्त्राणां निष्ठा परिसमाप्तिः। सप्तपदीगमनं पाणिग्रहणस्याङ्गमित्यभिप्रायः। तथा यमः। नोदकेन न वाचा च कन्यायाः पतिरिष्यते। पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे। तुल्यन्यायात् सप्रतियोगिकत्वाच्च भार्य्यात्वमपि तदैव भवति। भार्य्याशब्दस्य यूपाहवनीयादिवदलौकिकसंस्कारयुक्तवचनत्वात्। न च यमवचनं पाणिग्रहणात् पूर्व्वं वरमरणमात्रविषयमिति तत्त्वकारोक्तं युक्तमिति वाच्यम्। तावन्मात्रपरत्वे प्रमाणाभावात्, उत्तरार्द्धासङ्गतेश्च। लघुहारीतः। तत्रापि न पाणिग्रहणे जायापतित्वं कृत्स्नं कृत्स्नं हि जायापतित्वं सप्तमे पदे इति। यत्तु निष्ठा भार्य्यात्वस्य समाप्तिरूपा इति तत्त्वकृद्भिर्व्याख्यातम्। तच्चिन्त्यं, तेषामिति प्रत्यक्षमन्वयप्रतियोगिनमुपेक्ष्य भार्य्यात्वस्येत्यध्याहारे मानाभावात्। हरिवंशेऽपि। पाणिग्रहणमन्त्राणां निष्ठा स्यात् सप्तमे पदे इत्युक्तम्।

एतच्च पाणिग्रहणात् परं सप्तपदीगमनं छन्दोगेतरेषां, पारस्कराश्वलायनादिभिः स्वस्वगृह्ये पाणिग्रहणमभिधाय सप्तपदीगमनोक्तेः। छन्दोगानान्तु सप्तपदीगमनानन्तरं सप्तमे पदे स्थितायाएव पाणिग्रहणं गोभिलगृह्येऽभिहितम्। सप्तपदीगमनं पाणिग्रहणञ्चाभिधाय गृह्यान्तरे, अथोत्तरविवाह इत्यादिना पराचीनस्य कर्म्मकलापस्योत्तरविवाहत्वोक्तेश्च पाणिग्रहणस्य विवाहत्वमवगम्यते। किञ्चाश्वलायनगृह्ये उदगयने आपूर्य्यमाणे पक्षे कल्याणे

नक्षत्रे चौलकर्म्मोपनयनगोदानविवाहाः । सार्व्वकालमेके विवाहम् । तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयादित्यनेन विवाहात् पूर्व्वमाज्याहुतिचतुष्टयहोमो विहितः । तच्च पाणिग्रहणात् पुरस्तात् क्रियते । तस्मादवगच्छामः, पाणिग्रहणं विवाह इति ।

किञ्च पाणिग्रहणिकामन्त्राः पितृगोत्रापहारका इति, स्वगोत्रात् भ्रश्यते नारी विवाहात् सप्तमे पदे इति चैवमादिबृहस्पतिलघुहारीतादिवचनतात्पर्य्यपर्य्यालोचनयाऽपि पाणिग्रहणस्य विवाहत्वमवगम्यते । पाणिग्रहणिका मन्त्रा विवाहकर्म्माङ्गभूता इति वदद्भिः रत्नाकरकारैरपि भङ्ग्या पाणिग्रहणस्य विवाहकर्म्मत्वमङ्गीकृतं, तच्चैव तेषामङ्गत्वात् । न चैवं गान्धर्व्वादिविवाहानां विवाहत्वं न स्यादिति वाच्यम् । गान्धर्व्वादिविवाहेषु विधिर्वैवाहिको मतः । कर्त्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिक इति देवलवचनेन तत्रापि पाणिग्रहणादिविधानात् । अतएव गान्धर्व्वविवाहेणोढ़ायाः शकुन्तलायाः पाणिग्रहणं श्रूयते । यथा महाभारते शकुन्तलोपाख्याने । एवमुक्त्वा स राजर्षिस्तामनिन्दितगामिनीम् । जग्राह विधिवत् पाणावुवास च तया सह । एवमन्यत्राप्यनुसन्धेयम् ।

न चैवं पित्रादिभिरदत्ताया अपि पाणिग्रहणाद्भार्य्यात्वं स्यादिति वाच्यम् । पाणिग्राहस्य भार्य्या स्याद्यस्य चाद्भिः प्रदीयते इति महाभारतवचनेन प्रदत्तायाएव पाणिग्रहणाद्भार्य्यात्वावगतेः । अतएवानुशासनिके पर्व्वण्यष्टावक्रदिक्संवादे । यदि वा दोषजातं त्वं परदारेषु पश्यसि । आत्मानं स्पर्शयाम्यद्य पाणिं गृह्णीष्व मे द्विज । स्पर्शयामि प्रतिग्राहयामि । व्यक्तमुक्तं तच्चैव विवाहकथनाध्याये । बन्धुभिः समनुज्ञाते मन्त्रहोमौ प्रयोजयेत् । तथा सिध्यन्ति ते मन्त्रा नादत्तायाः कथञ्चन । यस्त्वत्र मन्त्रसमयो

भार्य्यापत्योर्मिथः कृतः। तमेवाहुर्गरीयांसं यश्चासौ ज्ञातिभिः कृतः। मन्त्रः पाणिग्रहणमन्त्रः। अत्र विवाहे। दानमसाधारणमङ्गं, तस्य गरीयस्त्वाभिधानात् तदभावे मन्त्राणामसिद्धुक्तेश्च। दानस्य त्वभावे बलात् पाणिग्रहणं निवर्त्तनीयमेव। पठन्ति च। अदत्ता तु यदा पित्रा बलात् कन्या विवाहिता। अन्यस्मै सा प्रदातव्या यथा कन्या तथैव सा। राक्षसादौ त्वन्तरेणापि दानं विवाहो भवत्येव। राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलादित्यादिवचनप्रामाण्यात्। एवञ्च बलादपहृता कन्या मन्त्रैर्यदि न संस्कृता। अन्यस्मै विधिवद्देया यथा कन्या तथैव सेति बलादपहृताया अपि मन्त्रसंस्कृतत्वे विवाहसिद्धिं बोधयद्दशिष्ठवचनमपि राक्षसविवाहविषयम्। तत्र बलादपहरणस्य विहितत्वादिति बोध्यम्।

तथाच तावदङ्गोपेतं पाणिग्रहणं विवाहः। गृह्यकारैः पाणिग्रहणमुपक्रम्यान्यस्येतिकर्त्तव्यतयोपदेशात्। तत्रापि किञ्चिदारादुपकारकं किञ्चिच्च सन्निपत्योपकारकं तत्तद्वचनात् प्रतिपत्तव्यम्। तदेतत् कन्यादानोत्तरभावित्वात् कन्यादानमिति, समाप्तासूद्वहस्वीति गोभिलसूत्रोक्तोद्वहनयोगादुद्वाहइति, हुते पतिर्यथेतं परिव्रज्य प्रदक्षिणमग्निं परिणयतीति तदुक्तपरिणयनयोगात् परिणयइति चैवमादि यथानिमित्तमाख्यायते। तदिदं तत्संबन्धात्ताच्छब्द्यम्। प्रधानेन व्यपदेशस्तु प्रसिद्धएव। अनयैव रीत्या कन्यादानस्य ब्राह्मादिरूपत्वं मन्वाद्युक्तं व्याख्येयम्।

अपरादित्योऽपि याज्ञवल्क्यटीकायां, विवाहशब्दो यद्यपि कन्यायाः सप्तपदातिक्रमणे मुख्यस्तथापि ऋत्विग्न्यायात्तत्तद्गृह्यादिशास्त्रविहितभार्य्यात्वसाधके कर्म्मसमुदाये वर्त्तते, स च समुदाय उपाधि

भेदाद्ब्राह्मादिव्यपदेशं लभते तदुपाधित्वेनैव दानविवाहशब्दयोः सामानाधिकरण्यम्। यथा अलङ्कृत्य कन्यामुदकपूर्व्वं दद्यादेष ब्राह्मो विवाह इति। न पुनर्दानमेव विवाहशब्दार्थ इत्याह। एतदभिप्रेत्यैव कृत्यचिन्तामणौ। कन्याविवाहसमयं परिचिन्त्य शास्त्राण्यत्र त्रिवर्गफलहेतुमभिव्यनक्ति। तस्य स्मृता वचनदान-होमचतुर्थीकर्म्माभिषेचनकरग्रहणानि भेदाः। शची योषित्कर्म्मभेदः शचीपूजा वा। भेदाः विशेषाः। कर्म्मसमुदायस्यैते विशेषा इत्यर्थः।

अतएवास्यापि पर्य्यनुयोगस्यानवकाशः, यदि पाणिग्रहणमेव विवाहस्तदा, पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते। असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्म्मणि। शरः क्षत्रियया ग्राह्यः प्रतोदो-वैश्यकन्यया। वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने इति मनुवचनयोरुद्वाहपाणिग्रहणयोर्भेदप्रतीतिः कथमुपपादनीयेति। यस्मादुद्वाहशब्देन कर्म्मसमुदायोऽभिधीयते तदेकदेशश्च पाणिग्रहण-मिति तयोर्भेदप्रतीतिरुपपद्यतएव। किञ्च उद्वाहकर्म्मणीत्यनेन पर्य्यायान्तरेण पाणिग्रहणमेवोच्यते। तथाच सवर्णासु तावत् पाणिग्रहणसंस्कारः क्षत्रियादिभिस्तु पाणिग्रहणकर्म्मणि शरादि-र्ग्राह्यइति न काचिदनुपपत्तिः।

तत्त्वकृतस्त्वेतत्सर्व्वमनालोच्य भार्य्यात्वसम्पादकग्रहणं विवाह-इत्याहुः। तच्चिन्त्यम्। प्रमाणाभावात्। न च सदृशानाहरे-द्दारानिति अतःपरं समावृत्तः कुर्य्याद्दारपरिग्रहमिति भार्य्यां विन्दे-तेत्यादियमसंवर्त्तविष्णुादिवचनं प्रमाणमिति वाच्यम्। तथाविध-वचनव्यक्तेरभावात्। अत्र खल्वाहरणं परिग्रहो वेदनञ्च पाणि-ग्रहणरूपतयैव पर्य्यवस्यति। अतएवानुशासनिके पर्व्वणि। अनु-कूलामनुवंशां भ्रात्रा दत्तामुपाग्निकाम्। परिक्रम्य यथान्यायं

भार्य्यां विन्देद्द्विजोत्तमः। अनुवंशामनुरूपवंशोत्पन्नाम्। उपाग्निकामग्निसमीपमागताम्। यथान्यायं गृह्योक्तप्रकारेणाग्निं परिक्रम्य भार्य्यां विन्देतेत्यभिधानात् प्रतिग्रह एव भार्य्याविदनमित्यसङ्गतं वचनम्। प्रतिग्रहात् परमग्निसमीपगमनस्य परिक्रमणादेश्चोपदेशात्। प्रतिग्रहरूपत्वेऽप्यमीषां, विवाहोऽयमित्यत्र प्रमाणाभावस्तदवस्थएव। प्रतिगृह्य तु यः कन्यामदुष्टामुत्सृजेद्वरः। स विनेयस्त्वकामोऽपि कन्यां तामेव चोद्वहेदिति नारदवचने प्रतिग्रहोद्वाहयोर्भेदप्रतीतिः। दातुमिच्छोर्दुहितरं प्राप्य धर्मेण चोद्वहेदिति व्यासेन प्राप्त्यनन्तरमुद्वाहोपदेशाच्च। प्राप्तिर्ग्रहणम्।

तथा, तस्य भार्य्यात्वसम्पादकत्वाभावाच्च। पूर्व्वोक्तप्रबन्धेन पाणिग्रहणस्यैव तथात्वावगतेः। अतएव, पाणिग्रहणात् पूर्व्वं दोषदर्शने कन्यायाः परित्यागो न तु तत्परतोऽपि। अतएव, अस्त्येवापहार आ सप्तमात् पदादिति मेधातिथिः। सप्तपदीगमनात् प्राग्भार्य्यात्वानिष्पत्तेः सत्यनुशये जह्यान्नोर्द्ध्वमिति कुल्लूकभट्टः। अनूपविलासे तु, चतुर्थीकर्म्मणो विवाहैकदेशत्वात्ततः पूर्वं तस्या भार्य्यात्वासम्भवादित्युक्तम्। किञ्च पारस्करेण, उदगयनआपूर्य्यमाणपक्षे पुण्याहे कुमार्य्याः पाणिं गृह्णीयादित्यनेन पाणिग्रहणमुपक्रम्य पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामतीति सूत्रेण ग्रहणस्य तत्रेतिकर्त्तव्यतयोपदेशान्न ग्रहणं विवाहः। अतएव प्रायः सर्व्वैरेव गृह्यकारैः पाणिग्रहणं सूचितम्। अतएव पूर्वलिखितविवाहभेदपरिगणनवाक्ये ग्रहणस्याकीर्त्तनं सङ्गच्छते। किञ्च ग्रहणस्य विवाहत्वे तावेहि विवहावहै इति पाणिग्रहणमन्त्रलिङ्गं विरुध्येत। विवाहस्य पूर्वमेव वृत्तत्वात् लोटः प्रयोगानुपपत्तेः। किञ्च ग्रहणस्य विवाहत्वे, स्त्रीणां विवाहः

संस्कारः, संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे इति विष्णुवचनात् पाणिग्रहणात् पूर्वं कन्यायामरणे पितृपक्षेऽशौचं न स्यात् । न स्यादेवेति चेन्न सकलप्रामाणिकविरोधापत्तेः । अकृतपाणिग्रहण-संस्काराणां मरणे भर्तृसपिण्डाः पितृपक्षीयसपिण्डाश्च त्र्यहेण शुध्यन्तीति स्वोक्तविरोधापत्तेश्च ।

यत्तु हरिवंशीयत्रिशङ्कूपाख्याने, पाणिग्रहणमन्त्राणां विघ्नं चक्रे स दुर्मतिः । येन भार्य्या हृता पूर्वं कृतोद्वाहा परस्य वै इति । तस्य, कृतोद्वहना विवाहार्थं स्वगृहमानीता पाणि-ग्रहणात् पूर्वं हृतेत्यर्थः । भार्य्येति भूतवदुपचारः । पाणि-ग्रहणात् पूर्वं भार्य्यात्वात्यन्तासम्भवात् । वस्तुतो भार्य्यात्वे जाते कृतोद्वाहा इत्यस्यानर्थक्यापत्तेश्च । अथवा कृतेत्यादिकर्म्मणि निष्ठयम् । तथा च कृतोद्वाहा प्रारब्धोद्वाहा पाणिग्रहणात् पूर्वं हृतेति तस्यार्थः । अयमपि भाविनि भूतवदुपचारो वा । बाल्यात् कामाच्च मोहाच्च संहर्षाच्चापलेन च । जहार कामात् कन्यां स कस्यचित् पुरवासिन इति तदुत्तरश्लोके कन्या-ग्रहणात् । विवाहितायाः कन्यात्वानुपपत्तेः । अतएव, लोक-प्रसिद्धस्तु कन्याशब्दः विवाहरहितस्त्रीमात्रमाचष्टे इति माधवा-चार्य्याः । तथाचानुशासनिके पर्वण्यष्टावक्रदिक्संवादे वृद्ध-स्त्रियोक्तम् । कौमारं ब्रह्मचर्य्यं मे कन्यैवास्मि न संशयः । तथा, शल्यपर्वणि वृद्धस्त्रियं प्रति नारदवाक्यम् । असंस्कृतायाः कन्यायाः कुतो लोकास्तवानघे । असंस्कृताया अविवाहितायाः, स्त्रीणां विवाहः संस्कार इति विष्णुवचनात् । अतएव कन्यायाः । "एतेन विवाहस्तु पाणिग्रहणात् पूर्वं वृत्त एवेति यदुक्तं, तदपि चिन्त्यम् ।

किञ्च सत्यव्रतस्य वस्तुतः परभार्य्याऽपहर्तृत्वे परभार्य्याऽपहरणं

महानपराध इति तस्मिन्नपरितोषात् पितुरधर्म्मोत्पत्तिः पितरमप्रबोधयन्तं वशिष्ठं प्रति सत्यव्रतस्य रोषश्चेति द्वयं तत्रैवोक्तं नोपपद्यते। यथा। तस्मिन्नपरितोषो यः पितुरासीन्महात्मनः। तेन द्वादश वर्षाणि नावर्षत् पाकशासनः। तस्मिन् सत्यव्रते। तथा, ततस्तस्मिंस्तु विषये नावर्षत् पाकशासनः। समा द्वादश राजेन्द्र तेनाधर्मेण वै तदा। तथा, पाणिग्रहणमन्त्राणां निष्ठा स्यात् सप्तमे पदे। न च सत्यव्रतस्तस्माद्धृतवान् सप्तमे पदे। जानन् धर्म्मान् वशिष्ठस्तु न मां त्रातीति भारत। सत्यव्रतस्तदा रोषं वशिष्ठे मनसाऽकरोत्। सत्यव्रत एव परतः शङ्कुत्रययोगात् त्रिशङ्कुतया ख्यातः। किञ्च तन्मतेऽपि करे गृह्य तथा कन्यामिति विष्णुधर्म्मोत्तरवचनेन करग्रहणेनैव कन्यायाः प्रतिग्रहानिष्पत्त्यभिधानात् करग्रहणपाणिग्रहणयोश्चानर्थान्तरत्वात् पाणिग्रहणेनैव प्रतिग्रहनिष्पत्तेर्न ज्ञानविशेषमात्राद्विवाहनिष्पत्तिरिति ध्येयम्।

अथ विवाह्याविवाह्यानिर्णयः। मनुशातातपौ। असपिण्डा च या मातुरसगोत्रा च या पितुः। सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने। चकाराभ्यामुभयस्योभयत्रानुषङ्गः। तत्र प्रमाणं वक्ष्यामः। या किल पितुर्मातुश्च न सपिण्डा न च समानगोत्रा सा द्विजातीनां दारकर्म्मणि विवाहे दारसम्पाद्ये वा मैथुने मिथुनसम्पाद्ये अग्न्याधानादौ प्रशस्ता प्रशंसया विहितेति मेधातिथिः। मिथुनं स्त्रीपुंसौ। अथवा दारकर्म्मणि दारसम्पाद्ये कर्म्मण्यग्न्याधानादौ। अभ्यर्हितत्वात् तस्य पृथगुपादानं प्रथमतोनिर्देशश्च। मैथुने ग्राम्यधर्मे। दारकर्म्मणोत्येतावन्मात्रोक्तौ यदा, सवर्णाऽग्रे द्विजातीनां प्रशस्ता दारकर्म्मणि। कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः। शूद्रैव भार्य्या

शूद्रस्य सा च स्वा च विशः स्मृते। ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मन इति मनुवचनानुसारेण कामार्थमसवर्णा परिणीयते, तत्रासपिण्डा च या मातुरित्येतन्न प्राप्नोति। तदर्थं मैथुने इत्युक्तम्। तावन्मात्रोक्तौ च कृतसमावर्त्तनस्य धर्म्मकृत्यार्थं सवर्णाविवाहे तन्न स्यादिति दारकर्म्मणीत्युक्तम्। मदनपारिजाते ...तम्। दारकर्म्मण्यमैथुने इति पाठे अमैथुने धर्म्मार्थे दारकर्म्मणीति व्याख्येयम्। अमैथुनीति पाठे या नियोगाद्युत्पद्यते सा मैथुनी तदितरा त्वमैथुनी पितुर्गोत्रसो, सेयं दारकर्म्मणि प्रशस्तेत्यर्थः।

अत्र च, लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः। पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषमिति मनूक्तमेव सापिण्ड्यं ग्रहीतव्यम्। न च,पञ्चमात्सप्तमादूर्द्धं मातृतः पितृतस्तथेति याज्ञवल्क्यवचनात्, पञ्चमात् सप्तमादूर्द्ध्वं मातृतः पितृतः क्रमात्। सपिण्डता निवर्त्तेत सर्ववर्णेष्वयं विधिरिति हरिनाथोपाध्यायधृतयमवचनेन मातृतः पञ्चमादूर्द्ध्वं वैवाहिकसापिण्ड्यनिवृत्तेरुक्तत्वाच्च कथं मातृपक्षे साप्तपौरुषं सापिण्ड्यमिति वाच्यम्। स्वोक्तं सापिण्ड्यमुपेक्ष्य परोक्तसापिण्ड्यग्रहणस्यान्याय्यत्वात्। तस्य कल्पान्तरत्वाच्च। अस्मिन् विषये मुनीनां मतभेदस्य बहुलमुपलम्भात्। एवञ्च पितरमादायाधस्तनी सप्तमीपर्य्यन्ता, तमेवादाय पूर्वेषां सप्तानां प्रत्येकमधस्तनसप्तमीपर्य्यन्ता च नोद्वाह्या। एवं, मातरमादायाधस्तनी सप्तमीपर्य्यन्ता तामेवादायोर्द्धतनसप्तानां सन्ततिः प्रत्येकं सप्तमीपर्य्यन्ता च नोद्वाह्या।

यद्यपि, अप्रत्तानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम्। प्रत्तानां भर्त्तृसापिण्ड्यं प्राह देवः पितामह इति कूर्म्मपुराणेन

विवाह्यितानां भर्त्तृमापिण्ड्येन सापिण्ड्योक्तेर्मातुरुपादानं व्यर्थमिव प्रतिभाति। तथापि यत्र कन्या पुत्रमुत्पाद्यापरिणीतैव परेता तत्र तथाविधस्य कानीनस्य पितुर्मातुश्च सापिण्ड्यभेदादुभयोपादानम्। न च कानीनः कन्यकाजातो मातामहसुतो मत इति याज्ञवल्क्येन तस्य मातामहसुतत्वाभिधानात् पितुर्मातुश्च सापिण्ड्यं तत्राप्येकमिति वाच्यम्। उत्पादयितुरपि पितृत्वेन तत्सापिण्ड्यस्य मातृसापिण्ड्यस्य च परस्परं भेदात्। किञ्चानियुक्तायां शुल्कतो हृतायामुत्पन्नस्य बीजिसन्तानत्वात्तत्र पितृमातृसपिण्ड्योर्भिन्नत्वादुभयोपादानम्। तथा च नारदः। जाता ये त्वनियुक्तायामेकेन बहुभिस्तथा। अरिक्थभाजस्ते सर्वे बीजिनामेव ते सुताः। दद्युस्ते बीजिने पिण्डं माता चेच्छुल्कतो हृता। अशुल्कोपहृतायान्तु पिण्डदा वोढुरेव ते। अरिक्थभाजः चेत्रिणामित्यर्थः। एवकारेण द्विपितृकत्वं निरस्तमिति श्राद्धविवेकः।

एवञ्च पितृसपिण्ड्यां प्रतिषिध्य मातृसपिण्ड्यायाः सामान्येन पृथक् प्रतिषेधारम्भस्यार्थवत्त्वार्थमन्यत्रापि मातरमादाय तदनूढ़ाकालीनसपिण्ड्यानां तत्पित्रादीनां तत्रान्तर्भावो वर्णनीयः। तेन पित्रादीनां सप्तानां मातामहादीनां पञ्चानां च प्रत्येकमधस्तनी सप्तमीपर्य्यन्ता नोद्वाह्येति सिध्यति। न चैवं मातामहादयः षडेवोपन्यसितुमुचिता इतिताननुपन्यस्य मातुरुपन्यासो विफल इति वाच्यम्। वाक्यलाघवात् स्वतन्त्रेच्छस्य नियन्तुमशक्यत्वादुक्तरीत्या क्वचित् मातृसन्ततिपितृसन्तत्योर्भेदेन मातुरुपन्यासस्यावश्यकत्वाच्च।

याज्ञवल्क्याद्युक्तकल्पे तु, मातामहादीनां चतुर्णां प्रत्येकमधस्तनसन्ततिः पञ्चमीपर्य्यन्ता नोद्वाह्येति बोद्धव्यम्। मिताक्षरायां-

मपि, मातरमारभ्य तत्पितृपितामहादिगणनायां पञ्चमपुरुष-सन्तानवर्त्तिनी मातृतः पञ्चमीत्युपचर्य्यते, एवं पितरमारभ्य तत्-पित्रादिगणनायां सप्तमपुरुषसन्तानवर्त्तिनी पितृतः सप्तमीत्युक्तम्। अतएव सुमन्तुः। मातृपितृसंबन्धा आ सप्तमादविवाह्याः कन्यका-भवन्ति आ पञ्चमादन्येषामिति मातृकुलेऽप्यासप्तमादविवाह्यत्वं ...कानामाह। पितरं मातरं चादाय पूर्वेषां पञ्चानां प्रत्येक-...स्तनसन्ततिः पञ्चमीपर्य्यन्ता नोद्वाह्या परतस्तूद्वाह्येत्यन्येषां मतम्।

न च, यं तन्मातरञ्चादाय गणनया मातृकुले आसप्तमत्व-मिति तल्लक्षुडिकत्वं युक्तमिति वाच्यम्। यस्य कुत्रापि गणना-प्रतियोगित्वादर्शनात्। तस्य गणनायामप्रतियोगित्वादिति तैरेवोक्तम्। किञ्चोपात्तं प्रतियोगिनमुपेक्ष्यानुपात्तं प्रतियोगिनं प्रकल्पयतः श्रुतहानिरश्रुतकल्पना चापद्यते। न च तद्युक्तं, वाचनिकी हि व्यवस्था यथावचनमेवावधारयितव्या भवति। एतेन, सन्तानवर्जनं तु न सप्तमत्वं किन्तु वचनान्तरैकवाक्य-तया मातामहादिपञ्चानामेव पञ्चमी ग्राह्येति यदुक्तं, तदपि चिन्त्यम्। अर्द्धजरतीयन्यायापातात्। सप्तमपदस्य पितृपक्षे सप्तमपरत्वस्यावश्यवक्तव्यत्वेन मातृपक्षे पञ्चमपरत्वस्यासम्भवात्। तात्पर्य्यभेदकल्पनस्यान्याय्यत्वात्। सकृच्छ्रुतस्योभयार्थपरत्वा-नुपपत्तेश्च। उभयोर्वैषम्येनैकवाक्यत्वासम्भवाच्च। एतेनान्यथा नानाश्रुतिकल्पना स्यादिति यदुक्तं, तदपि चिन्त्यम्। मूलिनो-र्वैषम्ये मूलयोरपि वैषम्यस्यावश्यकत्वात् मूलमूलिनोरैकरूप्य-नियमात्।

यच्च, मातृपदे मातामहलक्षणा शूलपाणिप्रभृतिभिरुक्ता,

तदस्मभ्यं न रोचते। सर्वैरेव मुनिभिर्मातृपदप्रयोगात्। उक्त-रीत्या वाक्यार्थोपपत्तौ लक्षणाया अन्याय्यत्वाच्च मुख्यार्थबाध-मूलत्वात्तस्याः। माधवाचार्य्यप्रभृतयोऽप्यत्र लक्षणां नोक्तवन्तः।

कल्पान्तरमाह मार्कण्डेयपुराणम्। उद्वहेत् पितृमात्रोस्तु सप्तमीं पञ्चमीं तथा। पितुः सप्तमीं पञ्चमीं चोद्वहेत्। एवं मातुरपि। न च, पितुः सप्तमीं मातुः पञ्चमीं परिहृत्योद्वहेदिति व्याख्यानं युक्तमिति वाच्यम्। पितृमात्रोः समस्याभिधानेन सप्तमीं पञ्चमीमित्यसमासकरणेन तथापदोपादानेन च पितृ-मात्रोरेव सप्तमीं तयोरेव च पञ्चमीमित्यवगतेः। अध्याहार-कल्पनायां शास्त्रार्थवैरूप्यापत्तेः। अर्थभेदेन वचनान्तरैकवाक्यत्व-स्याप्ययोगात्। स्वायत्ते च नोद्वहेदिति प्रयोक्तव्ये उद्वहेदिति पदप्रयोगस्यान्याय्यत्वात्। विष्णुपुराणम्। सप्तमीं पितृपक्षाच्च मातृपक्षाच्च पञ्चमीम्। उद्वहेत द्विजो भार्य्यां न्यायेन विधिना नृप। वशिष्ठः। पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा। पैठिनसिः। पञ्च मातृतः परिहरेत् सप्त पितृतस्त्रीन् मातृतः पञ्च पितृतो वा। पञ्च मातृत इति मातामहादीनां चतुर्णां प्रत्येकं पञ्चमीपर्य्यन्ता सन्ततिः परिहरणीया। त्रीनित्युद्देश्यविशे-षणतया पुंस्त्वमविवक्षितं, छान्दसो वा व्यत्ययः। मातृतः पञ्च वा त्रीन् वा पितृतः सप्त वा पञ्च वा परिहरेदिति व्यक्तं विकल्पमाह।

एतेन, त्रीनित्याद्यधिकदोषार्थमिति तत्त्वकारसमाधानं चिन्त-नीयम्। असमानजातीयाविवाहे त्रीनित्यादि व्यवस्थितविकल्प-इति रत्नाकरः। तदपि चिन्त्यम्। यद्येकजाताबहवः पृथक्-क्षेत्राः पृथग्धनाः। एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्त्तते त्रिषु इति शङ्खवचनेन, सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते।

सजातीयेषु वर्णेषु चतुर्थे भिन्नजातिषु इति वृद्धपराशरवचनेनन च तत्रापिण्ड्यस्य त्रैपुरुषिकत्वेन पञ्चेत्यनुपपत्तेः । प्रमाणाभावाच्च । यस्य सापिण्ड्यं विविच्यते तं परित्यज्य सप्तमे चतुर्थे च तन्निवृत्ति-रित्यर्थः । त्रीन् पञ्चेत्यासुरादिविवाहविषयं चत्रियादि-विवाहविषयं वेति शूलपाण्युक्तमपि प्रमाणाभावात् सन्देहादेक-ानुष्ठानानुपपत्तेश्चोपेक्षणीयम् ।

यद्यपि, असगोत्रो यदि बीजी स्यात्तदा पाञ्चपौरुषी सपिण्डता सगोत्रो यदि बीजी स्यात्तदा साप्तपौरुषीति । भवदेवभट्टधृतविष्णु-वचनात् पञ्चेत्यसगोत्रबीजिसपिण्डपरतयोपपद्यते, तथापि पञ्च मातृतः परिहरेत् सप्त पितृतस्त्रीन् मातृतः पञ्च पितृतो वेति तुल्यवद्विकल्पाभिधानस्वरसात्तत्परतया वर्णनमपि नाद्रियते । विष्णुवचनस्य सापिण्ड्यपरत्वेन विवाहपरत्वाभावाच्च । तत्परत्वे वा कल्पान्तरं भविष्यति । अतएव,ऊर्द्ध्वं सप्तमात् पितृबन्धुभ्यो बीजिन-श्चेति गौतमेन सामान्यत एव बीजिनः सप्तमादूर्द्ध्वं विवाहोऽभि-हितः ।न च,सप्तमे पञ्चमे वापि येषां वैवाहिकी क्रिया । ते च सन्तानिनः सर्व्वे पतिताः शूद्रतां गता इति नारदवचनात्, पञ्चमे सप्तमे वापि येषां वैवाहिकी क्रिया। क्रियापरा अपि हि ते पतिताः शूद्रतां गता इति मरीचिवचनाच्च कथं तत्र विवाह इति वाच्यम् । अनयोर्विहितप्रतिषेधरूपत्वात् । तस्मान्मतभेदोऽयम् । एवञ्चानापदि न तत्र प्रवर्त्तितव्यमापदि तु प्रवर्त्तितव्यमिति सिध्यति । अतएव त्रीनित्यनुकल्प इति माधवाचार्य्याः । स्मृतिदर्पणेऽपि अत्यन्तासम्भवे पैठिनसिः त्रीनतीत्य मातृतः पञ्चातीत्य पितृतइत्युक्तम् । अतएवा-निष्टाशङ्कया प्रायशस्तत्र शिष्टा न प्रवर्त्तन्ते । पैठिनसिमत-मेतदिति कृत्वा तु क्वचित् क्वचित् प्रवर्त्तमाना अपि दृश्यन्ते ।

यत्तु, मातृष्वसृदुहितरः पितृष्वसृदुहितरो मातुलसुताश्च धर्म्मतस्ता भगिन्यो भवन्ति तावर्जयेदिति पैठिनसिवचनान्तरं, तदधिकदोषार्थं तत्र विकल्पाश्रवणात्। दाक्षिणात्याः किल मातुलकन्यामुद्वहन्ति, तदभिप्रायेणायं पृथङ्निषेधः। मातृष्वसृदुहितॄणां पितृष्वसृदुहितॄणाञ्च दृष्टान्तविधया तत्रोपन्यासः। पितृष्वसृदुहिता हि तैरपि न परिणीयते। निर्णयसिन्धौ वैजयन्त्यां च चतुर्विंशतिमतम्। सप्तमीं पञ्चमीं चैव मातृतः पितृतस्तथा। दशभिः पुरुषैः ख्यातात् श्रोत्रियाणां महाकुलात्। उद्वहेत् सप्तमादूर्द्ध्वं तदभावे तु सप्तमीम्। पञ्चमीं तदभावे तु पितृपक्षेऽप्ययं विधिः। सप्तमीं च तथा षष्ठीं पञ्चमीं च तथैव च। एवमुद्वाहयेत् कन्यां न दोषः शाकटायनः। तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि। विवाहयेन्मनुः प्राह पाराशर्य्योऽङ्गिरा यमः। यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत्। नित्यं स व्यवहार्य्यः स्यादेदाच्चैतत् प्रदृश्यते।

न चैवं, तृतीयस्या अपि कन्याया विवाह्यत्वं स्यादिति वाच्यम्। यस्तु देशानुसारेणेत्युपसंहारात् नित्यं स व्यवहार्य्यः स्यादित्यभिधानाच्च तस्य देशाचारमात्रत्वप्रतिपादनपरत्वात्। वृहस्पतिरपि। उद्वुह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः। मध्यादाश्च नराः पूर्व्वं व्यभिचाररताः स्त्रियः। उत्तरे मद्यपाश्चैव स्पृश्या नृणां रजस्वला। सजातायापि गृह्णन्ति भ्रातृभार्य्यामभर्त्तृकाम्। सर्व्वदेशेष्वनाचारो रथ्याताम्बूलचर्व्वणम्। अनेन कर्म्मणा नैते प्रायश्चित्तदमावहा इति देशाचारत्वमेव तस्य स्मरति। यथा हि, गुरुनये अष्टवर्षं ब्राह्मणमुपनयीत इति श्रुतौ आचार्य्यकरणे नयतेरात्मनेपदस्य पाणिनिना स्मृतत्वादाचार्य्यत्वकामस्याध्यापनविधावधिकारात् माणवकस्याध्ययनमन्तरेणाचार्य्यस्याध्यापनानुपपत्तेरर्थापत्त्या माणवकस्या-

ध्ययनाक्षेपादध्ययनस्य प्राप्तत्वेन. स्वाध्यायोऽध्येतव्य इति नित्यानुवादो न विधिरिति सिद्धान्तः, तथा प्रकृतेऽपि देशाचारादेव तृतीयोद्वाहस्य प्राप्तत्वाद्विवाहयेदिति नित्यानुवादो न विधिः । अनिरुद्धभट्टेनापि, यदपि विष्णुवचने कुर्य्यादित्युक्तं तदपि देशविशेषवासिसमस्तजनानुष्ठीयमानानां परम्पराप्राप्तानाचाराणां नृपतेः संरक्षणीयत्वात् प्रजोद्वेगनिवृत्त्यर्थं कर्त्तव्यताऽभ्यनुज्ञानमित्यभिहितम् । शातातपोऽपि । मातृष्वसृसुतां केचित् पितृष्वसृसुतान्तथा । विवहन्ति क्वचिद्देशे सङ्कोच्यापि सपिण्डतामिति देशाचारत्वमाह, न त्वेतदभ्यनुजानाति ।

न च दाक्षिणात्यानामाचारादाचारस्यापि स्मृतिमूलतया प्रमाणत्वमिति वाच्यम् । देशजातिकुलधर्म्माश्चाम्नायैरविरुद्धाः प्रमाणमिति गौतमवचनेन, लोके प्रेत्य वा विहितोधर्म्मस्तदलाभे शिष्टाचारः प्रमाणमिति वशिष्ठवचनेन च स्मृतिविरुद्धस्याचारस्याप्रमाणत्वात् । अतएव मीमांसावार्त्तिककृद्भिर्मातुलकन्योद्वाहाचारस्याप्रमाणत्वं तन्त्रवार्त्तिके सिद्धान्तितम् । न्यायमालायामपि । यो मातुलविवाहादौ शिष्टाचारः स मा न वा । इतराचारवन्मात्वममात्वं स्मार्त्तबाधनात् । स्मृतिमूलोहि सर्व्वत्र शिष्टाचारस्ततोऽत्र च । अनुमेया स्मृतिः स्मृत्या बाध्या प्रत्यक्षया तु सा इत्युक्तम् । स्मृतिविरोधश्च पूर्व्वलिखितपैठिनस्यादिवाक्यैरवगन्तव्यः । तथा शातातपः । मातुलस्य सुतामुद्वा मातृगोत्रां तथैव च । समानप्रवराञ्चैव त्यक्त्वा चान्द्रायणं चरेत् । माधवीयादौ मनुः । पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च । मातुश्च भ्रातुराप्तस्य गत्वा चान्द्रायणं चरेत् । एतास्तिस्रस्तु भार्य्यार्थे नोपयच्छेत बुद्धिमान् । ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्नधः । आप्तस्य सहोदरस्य । शेषिकी षष्ठी । ज्ञातित्वेन सपिण्डत्वेन ।

बौधायनोऽपि मातुलसुतापरिणयस्यानाचारत्वमाह। यथा, पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः। यानि दक्षिणतस्तानि व्याख्यास्यामः। यथैतदनुपेतेन सह भोजनं स्त्रिया सह भोजनं मातुलपितृष्वसृदुहितृगमनमिति। अथोत्तरत ऊर्णाविक्रयः सीधुपानमुभयतोदद्भिर्व्यवहारः आयुधीयकं समुद्रसंयानमिति। इतरदितरस्मिन् कुर्व्वन् दुष्यतीतरदितरस्मिन्। तत्र तत्र देशप्रामाण्यमेव स्यात्। मिथ्यैतदिति गौतमः। उभयं चैव नाद्रियेत शिष्टस्मृतिविरोधदर्शनात्। इतरस्मिन्नुत्तरत इतरदनुपेतसहभोजनादिकं कुर्वन् दुष्यति, इतरस्मिन् दक्षिणतइतरदूर्णाविक्रयादिकं कुर्वन् दुष्यति, तत्र तत्र तस्य तस्य करणे देशप्रामाण्याददोष इत्यर्थः। गौतमस्त्वाचार्य्योमन्यते, एतददोषवचनं मिथ्या तत्र तत्रापि दोषएव भवति। तदेवाह उभयं चैवेति। तत्र हेतुः शिष्टेति। तत्प्रमाणं वादरायणस्येत्यादिवद्गौतमग्रहणं पूजार्थं नात्मीयमतपर्य्युदासार्थम्। माधवाचार्य्यास्तु स्वमतरक्षणापेक्षिणो मिथ्यैतदित्यादिप्रतीकं न लिलिखुः। तदश्रद्धेयम्। आकरग्रन्थे पठितत्वात्। कल्पतरुप्रभृतिभिर्लिखितत्वाच्च। एतेन मातुलदुहिता परिणेयेति दाक्षिणात्यमतमनादेयम्।

न च, तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिति मन्त्रवर्णात्, तस्माद्वा समानादेव पुरुषादत्ता चाद्यश्च जायते उत तृतीये सङ्गच्छावहै चतुर्थे सङ्गच्छावहै इति शतपथब्राह्मणाच्च मातुलसुतोद्वाहः शास्त्रीय इति वाच्यम्। योषाभागसंगमनानां दुहितृविवाह्यग्राम्यधर्म्मरूपत्वे मानाभावात्। न हि वपा इन्द्रस्य विवाह्या नाम। तृप्तामाज्यादिभिः संस्कृतां वपां जहुस्त्वामुद्दिश्य त्यक्तवन्तः स त्वमिमां वपां जुषस्व सेवस्वेति गतेन सम्बन्धः।

यथा मातुलस्य योषा पैतृष्वसेयी च भागो भजनीया तथेयं वपा तव भाग इति मन्त्रार्थः । किञ्च मन्त्राणामविधायकत्वाद्ब्राह्मणस्य चार्थवादरूपत्वादर्थवादानाञ्च विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युरिति पूर्व्वमीमांसासिद्धान्तात् न स्वार्थे प्रामाण्यम् । अन्यथा, गर्भे नु नौ जनिता दम्पती करितिमन्त्रवर्णात् तस्माद्वा समानादेव पुरुषादत्ता चाद्यश्च जायते इति ब्राह्मणवाक्याच्च सोदरभगिन्या अपि विवाह्यत्वापत्तेः । जनिता जनयिता प्रजापतिर्गर्भे नु गर्भावस्थायामेव नौ आवां दम्पती जायापती कः अकरोदिति यमं प्रति यम्यावचनम् ।

यत्तु, उपरि हि देवेभ्योधारयतीतिवदनुवादानुपपत्त्या विधिकल्पनेत्युक्तम् । तदपि चिन्त्यम् । आचारप्राप्तस्यानुवादोपपत्तेः । अन्यथा पूर्व्वोक्तवाक्ययोः, प्रजापतिः स्वां दुहितरमभ्यगादित्यादौ च विधिकल्पने महाविप्लवापत्तेः । यद्यप्युत्तरमीमांसायां देवताधिकरणे, मानान्तराविरुद्धानामननुवादानां मन्त्रार्थवादानां स्वार्थे प्रामाण्यं भाष्यकारैरुक्तम् । तथाप्यत्र मानान्तरविरोधादनुवादोपपत्तेश्च न स्वार्थे प्रामाण्यम् । अतएव बौधायनादीनां तस्यानाचारत्वोक्तिर्निन्दा च सङ्गच्छते । विधिकल्पनायान्तु तदुभयं न स्यात् । अतएव व्यासः । वेदार्थोयः समाख्यातस्तत्राज्ञानं भवेद्यदि । ऋषिभिर्निश्चिते तत्र का शङ्का स्यान्मणीषिणाम् । दत्तकस्य पालकदत्तिममातृसोदरकन्याविषयमसवर्णमातुलकन्याविषयं वा चतुर्विंशतिमतवाक्यमित्यस्मिन्नपि पक्षे कलौ तावत्तन्न भवत्येव । गोत्रान्मातुः सपिण्डाच्च विवाहो गोवधस्तथेति कलिनिषिद्धमध्ये-पठितत्वात् । एतेन दाक्षिणात्यशिष्टपरिगृहीतत्वान्मातुलकन्या परिणेयेत्यपि चिन्त्यम् ।

किञ्च बौधायनेनार्य्यावर्त्ताचारस्य प्रमाणतया स्मृतत्वाद्दाक्षिणात्यानामाचारोनातीवादरणीयः। तथा च बौधायनः। प्रागदर्शनात् प्रत्यक्कालकाद्वनात् दक्षिणेन हिमवन्तमुदक्पारियात्रमेतदार्य्यावर्त्तं तस्मिन् य आचारः स प्रमाणम्। गङ्गायमुनयोरन्तरमित्येके। अथाप्यत्र भाल्लविनो गाथामुदाहरन्ति। पश्चात् सिन्धुर्विधरणी सूर्य्यस्योदयनं पुरः। यावत् कृष्णा विधावन्ति तावद्धि ब्रह्मवर्चसमिति। अवन्तयोऽङ्गमगधाः सुराष्ट्रा दक्षिणापथाः। उपावृत्सिन्धुसौवीरा एते सङ्कीर्णयोनयः।

तदस्तु प्रकृतमनुसरामः। पूर्व्वोक्तविष्णुपुराणवाक्ये सप्तमीं पितृपक्षादित्यादौ पक्षपदोपादानात् न परं पित्रादिसपिण्डात् यावत् पित्रादिबन्धुभ्योऽपि सप्तमीमित्याद्यर्थः प्रतीयते। तथा च नारदः। आ सप्तमात् पञ्चमाद्वा बन्धुभ्यः पितृमातृतः। अविवाह्याः सगोत्राः स्युः समानप्रवरास्तथा। पितृबन्धुभ्य आ सप्तमात् पञ्चमाद्वा, एवं मातृबन्धुभ्योऽप्यासप्तमात् पञ्चमाद्वाऽविवाह्यत्वमित्यर्थः। पञ्चमाच्चेति पाठोऽनाकरः। साकरत्वेऽपि पितृबन्धुभ्य आ सप्तमादापञ्चमाच्चाविवाह्यत्वमेवं मातृबन्धुभ्योऽपीत्युभयत्रैव कल्पद्वयमुपतिष्ठते। पितृमात्रोः समस्याभिधानात्। पितृमातृबान्धवाश्च स्मृत्यन्तरेऽभिहिताः। यथा, पितुः पितुः स्वसुः पुत्राः पितुर्मातुः स्वसुः सुताः। पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः। मातुर्मातुः स्वसुः पुत्रामातुः पितुः स्वसुः सुताः। मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः। एवञ्च पितामहभगिनीपुत्रपितामहीभगिनीपुत्रपितामहीभ्रातृपुत्रास्त्रयः पितृबान्धवाः, मातामहीभगिनीपुत्रमातामहभगिनीपुत्रमातामहीभ्रातृपुत्रास्त्रयो मातृबान्धवा भवन्ति। स्मृतिदर्पणे तु, आदिपुरुषस्य

सगोत्रत्वे पितृबन्धुत्वमसगोत्रत्वे मातृबन्धुत्वमिति वाजपेयिलक्षणानुसारिणौढ्रदेशीयानां व्यवहार इत्युक्तम् । गौतमः । ऊर्द्ध्वं सप्तमात् पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमात् । यस्य बीजादुत्पद्यते सोऽयं बीजी । तेन क्षेत्रजादेर्बीजिनोऽपि सप्तमीपर्य्यन्ता नोद्वाह्या । एवं, दत्तकस्य जनकपित्रादिकुलेऽपि सप्तमादूर्द्धमेव विवाहः । पूर्व्वोक्तमन्वादिवचनेषु पित्रादिपदोपादानाच्च ।

ननु स्त्रियाः पार्वणपिण्डदातृत्वाभावात् कथं तस्याः सापिण्ड्यमिति चेत् । तद्योग्यतयेति ब्रूमः । योग्यता च कदाचित्तस्या अपि पिण्डदानसम्भवाद्वा तत्संख्याऽभिव्याप्ततया वा । न चात्र प्रमाणं नास्तीति वाच्यम् । स्त्रियाः सापिण्ड्यबोधकवचनानामेवात्र प्रमाणत्वात् । तस्मात् पिण्डलेपसंबन्धविरहेऽपि सप्तमान्तर्गतत्वमात्रेणैवात्र सापिण्ड्यम् । अतएवासप्तसादित्यादि तत्र तत्रोक्तम् । अतएवाधस्तनवदूर्द्धतनगणनायामपि पुरुषाणामिव स्त्रीणामप्यन्तर्भावोवाच्यो विशेषाभावात् । अतएव सपिण्डासगोत्रयोः पृथगुपादानं सङ्गच्छते । उक्तरीत्या आ सप्तमादित्यादुपादानेन च योयः कश्चित् सप्तमान्तर्गतः पुरुषो वा स्त्री वा तयोरुभयोरप्यविशेषादृगणनायामन्तर्भावो बोद्धव्यः ।

यत्तु, आ सप्तमात् पञ्चमाच्च बन्धुभ्यः पितृमातृत इति नारदवचने पुंस्त्वस्य विधेयविशेषणत्वेन विवक्षितत्वात् पूर्व्वेषां पुंसामेव ग्रहणमिति तत्त्वकारादिभिरुक्तम् । तच्चिन्त्यम् । तथात्वे बन्धुमातुरग्रहणापत्तेः । किञ्च मातृतः पितृतो बन्धुभ्यश्चेत्यत्र पञ्चमीविवक्षार्व्विनिगमकाभावात् पूर्व्वापरावधिकार्थो इति तत्त्वकृद्भिरेव व्याख्यानम् । एवञ्च पुंस्त्वस्य विवक्षितत्वे ऊर्द्धतनवदधस्तनेऽपि स्त्रीणां ग्रहणं न स्यात् । न च, सप्तमपञ्चममध्यपुरुषाणां पुरुषान्तरेण

विवाह्यत्वाप्रसक्तेस्तत्परम्पराजातानां स्त्रीणामन्तर्भाव इति वाच्यम् । यतस्तथात्वे पुंस्त्वस्य विवक्षितत्वानुपपत्तेरकामेनापि तस्याविवक्षितत्वं वाच्यम् । न चोर्द्धतनगणनायां तस्य विवक्षितत्वमिति-वाच्यम् । अर्द्धजरतीयत्वस्यान्याय्यत्वात् वाक्यभेदापत्तेस्तावताऽपि बन्धुमातुर्ग्रहणानुपपत्तेश्च ।

वस्तुतस्तु, न ह्यत्रासप्तमादित्यादिर्विधीयते किन्तु सप्तमाद्यन्तवर्त्तिनीं कन्यामनूद्य तस्या अविवाह्यत्वमात्रमित्युद्देश्यविशेषणतया पुंस्त्वमविवक्षितं, सामान्यत्वान्नपुंसकनिर्देशो वाऽयमित्यास्थेयम् । तस्मादधस्तनवदूर्द्धतनगणनायामपि पुंसां स्त्रीणां चाविशेषेणान्तर्भावः । अतएव व्यासः । पितामहपितामह्योर्य्या मातामहसन्ततिः । सा नोद्वाह्या द्विजातीनामिति धर्म्मविदो विदुः । एवं मातामहस्यापि मातामह्यास्तथैवच ।

एवं, बन्ध्वपेक्षया गणनेऽपि तन्मातामहादीनामिव तन्मातामह्यादीनां तत्पित्रादीनाञ्चाविशेषात् गणनायामन्तर्भावो बोद्धव्यः । यच्च, पितृबन्धुमातृबन्धुपूर्व्वेषां वर्जने पितृबन्धुत्वसंबन्धबीजभूतानां पितुः पितामहादिमातामहादीनां मातृबन्धुत्वसंबन्धबीजभूतानां मातुः पितामहादिमातामहादीनाञ्च पुरुषपरम्पराणामेव ग्रहणं न तु पितृमातुलपुत्रमातृमातुलपुत्रेतरपितृबन्धुमातृबन्धुपितृप्रभृतीनां ग्रहणं संबन्धबीजित्वायोगादिति तत्त्वकृद्भिरुक्तम् । तच्चिन्त्यम् । न हि संबन्धबीजित्वेन बन्धुपूर्वेषां वर्जनं किन्तु बन्धुसंबन्धित्वेन, तच्च बन्धुपित्रादिष्वप्यविशिष्टम् । पितुः पितृष्वस्रादेरेव संबन्धबीजित्वेन तत्पित्रादीनां तथात्वाभावाच्च । पितुः पितृष्वस्रादिजनकतया परम्परया तेषां तथात्वमिति चेद्बन्ध्वादिजनकतया तत्पित्रादीनामपि तथात्वमिति ।

व्यासः। मातुः सपिण्डा यत्नेन वर्जनीया द्विजातिभिः। तथा स एव। सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्म्मणि। जन्मनाम्नोरविज्ञानादुद्वहेदविशङ्कितः। मातुः सगोत्रा नोद्वाह्येत्येकेषां मतम्। एकग्रहणात् उद्वाह्येति स्वमतं लक्ष्यते। तदेवोत्तरार्द्धेनोक्तम्। तथा च समानोदकभावनिवृत्तौ मातुः सगोत्राऽप्युद्वाह्यात स्वमतं पर्य्यवस्यति। तदपि कलौ न भवतीत्युक्तं प्राक्।

मन्वादिवचने पितुरसगोत्राया विवाह्यतयोक्तत्वात् दत्तकस्य ग्रहीतुरिव जनकस्यापि सगोत्रा वर्जनीयैव। तथा च पारिजाते स्मृतिः। द्व्यामुष्यायणकाये स्युर्दत्तकक्रीतकादयः। गोत्रद्वयेऽप्यनुद्वाह्यः शौङ्गशैशिरयोर्यथा। ये पुनर्द्व्यामुष्यायणाः द्विपितृकाः तेषां गोत्रद्वयेऽप्यनुद्वाहः। द्व्यामुष्यायणानेव दर्शयति दत्तकेति। शौङ्गशैशिरयोरिति तत्रैव निदर्शनोपन्यासः। तयोर्द्विगोत्रत्वात्।

विष्णुः। न सगोत्रां न समानप्रवरां भार्य्यां विन्देत। गोत्रप्रवरौ प्रसिद्धाविति न्यायाचार्य्याः। सर्वे किल तदुभयं स्मरन्ति अमुकगोत्रोऽमुकामुकप्रवरोऽहमिति। गोत्रं वंशपरम्पराप्रसिद्धमिति माधवीयमदनपारिजातमिताक्षराप्रभृतयः। ऋषय एव यज्ञे व्रियमाणाः प्रवरा इतिन्यायकुसुमाञ्जलिप्रकाशे वर्द्धमानोपाध्यायाः। कल्पसूत्रकाराः किल, वशिष्ठेति होता वशिष्ठवदित्यध्वर्य्युरित्यादिना येषां वरणमामनन्ति, ते प्रवराः। तत्त्वन्तु गोत्रभूतस्य पितृपितामहप्रपितामहाएव प्रवराः, पितैवाग्रेऽथ पुत्रोऽथ पौत्र इति शतपथश्रुतेरिति कमलाकरभट्टाः। माधवाचार्य्यास्त्वाचारमाधवीये, ऋषेरिदमार्षं प्रवरं गोत्रप्रवर्त्तकस्य मुनेर्व्यावर्त्तकमुनिगण इति, न्यायमालाविस्तरे

तु ऋषिर्गोत्रप्रवर्त्तकः कश्यपभरद्वाजादिस्तस्य संबन्ध आर्षेयः इत्याहुः। अत्र च फलतो न विरोधः।

गोत्रप्रवर्त्तकास्तु मुनयोऽगस्त्याष्टमाः सप्तर्षयः। तथाच बह्वृचपरिशिष्टे बौधायनः। विश्वामित्रोजमदग्निर्भरद्वाजोऽथ गौतमः। अत्रिर्वशिष्ठः कश्यपइत्येते सप्त ऋषयः। सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याचक्षते। यद्यपि विश्वामित्रादीनां गोत्रत्वमेवं सति न प्राप्नोति, तथापि तेषां पूर्व्वभाविविश्वामित्राद्यपत्यतया गोत्रत्वमनुसरणीयम्। तथाच पूर्वेषां परेषाञ्चैतद्गोत्रमिति सिध्यति। एतेन, जमदग्निर्भरद्वाजो विश्वामित्रात्रिगौतमाः। वशिष्ठकाश्यपागस्त्यामुनयो गोत्रकारिणः। एतेषां यान्यपत्यानि तानि गोत्राणि मन्वते इति स्मृतौ गोत्राणि तत्तन्नामकगोत्रभागीनि इति तत्त्वकारव्याख्यानं चिन्त्यम्। एवञ्चाष्टानामृषीणामपत्यानां गोत्रत्वात् तेषाञ्चानेकत्वाद्गोत्राणां प्रभूततमो-भेदः प्रचरति। तथाच बौधायनः। गोत्राणाञ्च सहस्राणि प्रयुतान्यर्वुदानि च। ऊनपञ्चाशदेतेषां प्रवरा ऋषिदर्शनात्।

यद्यपि तदपत्येषु भृग्वङ्गिरसोरनन्तर्भावाद्भार्गवादीनामसंग्रहस्तथापि शास्त्रान्तरस्वरसात्तेषामपि गोत्रत्वमनुचिन्तनीयम्। अत एव, गोत्रप्रवर्त्तकाश्च प्राधान्येनाष्टौ ऋषय इति माधवाचार्य्याः। अत्र प्राधान्येनेति कुर्व्वद्भिरन्येऽपि गोत्रप्रवर्त्तकाः सन्तीति सूचितम्। उच्चावचभेदभिन्नासु तदपत्यशाखासु कस्याञ्चिच्छाखायां तयोरन्तर्भावोपपत्तेश्च। यद्यपि गोत्रप्रवरौ स्मर्य्येते तथापि प्रवराणां बहुत्वात् कदाचिद्विस्मरेयुरिति कल्पसूत्रकारैः स्वस्वकल्पसूत्रे प्रवरा निबध्यन्ते। ते ततएवागन्तव्याः। ग्रन्थगौरवभयात् प्रसिद्धोपन्यासस्यानतिप्रयोजनत्वाच्चोपारभ्यतेऽस्माभिः।

समानगोत्रत्वमपि सप्त भृगवस्त्रयोऽङ्गिरसः चत्वारो भरद्वाजादश विश्वामित्राः पञ्च कश्यपा इत्यादिप्रपञ्चेनाकरग्रन्थेषु व्युत्पादितं तत्रैव द्रष्टव्यम् । परस्परमविवाह्याश्च ऋषयो मत्स्यपुराणादिषु बहुलमुपदिष्टाः ग्रन्थगौरवभयादिह नोच्यन्ते । नास्त्येव भृग्वङ्गिरसां गोत्रत्वं समानप्रवरत्वादेव त्वविवाह इति केचित् । आश्वलायनकल्पसूत्रवृत्तिकारैरप्युक्तम् । यस्त्वगस्त्याष्टमानामन्येष्वपि गोत्रशब्दो लोके प्रयुज्यमानो दृश्यते मित्रयुवगोत्रोऽहं मुद्गलगोत्रोऽहमित्येवमादिषु, स चौपचारिकः परामर्शजः प्रयोगः । अगस्त्याष्टमानामपत्येष्वयास्यगर्गकुण्डिनादिषु गौतमभरद्वाजवशिष्ठादिषु गोत्रत्वमस्ति तत्सामान्यं दृष्ट्वा मित्रयुवमुद्गलादिषु परामर्शेन लौकिकाः प्रयुञ्जते इत्यन्तेन । एवञ्च तन्मतानुसारेण महाजनविरोधभयादजहत्स्वार्थलक्षणया गोत्रपदस्योभयपरत्वेऽपि न क्षतिरिति धेयम् ।

समानप्रवरानिषेधे विशेषमाह बह्वृचपरिशिष्टे बौधायनः । एक एव ऋषिर्यावत् प्रवरेष्वनुवर्त्तते । तावत् समानगोत्रत्वमन्यत्र भृग्वङ्गिरसां गणादित्यसमानप्रवरैर्विवाहः । समानगोत्रत्वं समानप्रवरत्वमिति मदनपारिजातः । शौनकः । एकएव ऋषिर्यावत्प्रवरेष्वपि दृश्यते । तावता न विवाहोऽस्ति ऋते भृग्वङ्गिरोगणात् । निर्णयसिन्धौ स्मृतिः । एकस्मिन् प्रवरे तुल्ये मातृगोत्रे वरस्य च । तमुद्वाहं न कुर्व्वीत सा कन्या भगिनी स्मृता । भृग्वङ्गिरोगणेषु विशेषमाह पारिजातादिषु बौधायनः । द्व्यार्षेयसन्निपातेऽविवाहस्त्र्यार्षेयाणां त्र्यार्षेयसन्निपातेऽविवाहः पञ्चार्षेयाणाम् । संग्रहकारैरप्युक्तम् । पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः । भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत् । इदं सूत्रान्तरमिति कमलाकर-

भट्टाः। एकस्यापि ऋषेरनुवर्त्तनेन समानप्रवरत्वमित्येतदभिप्रायेणैव, नोद्वहेत् पितृगोत्रां च जाताञ्चापि कुलान्तरे। त्यजेच्च तुल्यप्रवरां यत्र नाङ्गिरसो गण इति दामोदराचार्य्यलिखितव्यासवचनं वर्णनीयम्। एकस्मिन्नपि हि प्रवरे तुल्ये भवत्येव तुल्यप्रवरेति तावन्मात्रेणाङ्गिरसगणेषु तुल्यप्रवरा न त्याज्या, किन्तु तत्र द्व्यार्षेयादितुल्यतयैव त्याज्यत्वमित्यर्थः।

मनुभाष्येऽप्युक्तम्। यदेतदसमानप्रवरैरिति नामधेयतस्तावत् समानत्वं न संख्यातः। नामधेयसमानत्वे च किं यत्र सर्व्वाण्येव समानानि तत्र प्रतिषेध उतैकस्मिन्नपि समाने। तत्र यदि समुदितानां प्रवरत्वं, तत्र समाने कस्मिंश्चिद्भिन्नेऽन्यस्मिन्नन्यः समुदायः सञ्जात इत्यसमानप्रवरत्वादप्रतिषेधः। एवञ्चोपमन्यूनां पराशराणां च स्याद्विवाहः। भिन्नं तयोर्गोत्रं एके उपमन्यवः अपरे पराशराः पूर्व्वेण च न्यायेन प्रवरभेदः। उपमन्यूनां वाशिष्ठभरद्वाजैकपादिति प्रवराः, पराशराणां वाशिष्ठगार्ग्यपाराशर्य्येति। अथैकैकस्य प्रवरत्वमेकस्मिन्नपि समाने प्रतिषेधः। तद्यथा, माषा न भोक्तव्या मिश्रा अपि न भुज्यन्ते। किं पुनरत्र युक्तम्। एकैकस्य प्रवरत्वम्। तथाहि सामानाधिकरण्यं दृश्यते, आर्षेयं वृणीते एकं वृणीते द्वौ वृणीते त्रीन् वृणीते इति प्रतिपन्न एकः, तस्मात्स्थितेऽप्येषामविवाह इत्यन्तेन।

यत्तु, पूर्व्वोक्तव्यासवचनात् अङ्गिरोगणानुप्रवेशे सर्व्वत्रैव समानप्रवराविवाहो न निषिद्ध इत्युक्तम्। तदुक्तबौधायनादिवचनानवलोकनेन। यदपि, समानप्रवरत्वं संख्यासंज्ञयोरन्यूनानतिरिक्तत्वे बोध्यमिति तत्त्वकारैरुक्तम्। तदप्युक्तवचनजातानवलोकनेनेत्यनादरणीयम्। कामरूपदेशीयास्तु, पितुः सपिण्डां

मातुश्च समानोदकजामपि। नोद्वहेत् पितृगोत्राच्च हित्वाऽऽल-
म्यानकाश्यपाविति शौनकनाम्ना वचनं पठन्तस्तथैव व्यवहरन्ति।
गौड़ादयस्त्वेतन्नाद्रियन्ते।

गोत्रभेदेऽपि प्रवरैक्यमस्ति। तद्यथा, याज्ञवल्क्यवाधूल-
शौनकानां भिन्नगोत्राणां भार्गववीतहव्यसावेतसेति प्रवरैक्यम्।
एकगोत्रेऽपि प्रवरभेदः। यथा शुनकानां गृत्समदेति भार्गव-
शौनहोत्रगार्त्समदेति वा प्रवराः। अतो गोत्रं प्रवरश्च पृथङ्-
निषिध्यते। तथाचापस्तम्बः। समानगोत्राय कन्यां न दद्यात्।
गौतमः। असमानप्रवरैर्विवाहः। बौधायनः। सगोत्रां चेदमत्या
उपयच्छेन्मातृवदेनां परित्यज्य बिभृयात्। सुमन्तुः। पितृष्वसृ-
सुतां मातृष्वसृसुतां मातुलसुतां मातृसगोत्रां समानार्षेयीं
विवाह्य चान्द्रायणं चरेत् परिहृत्य चैनां बिभृयादिति।
मदनपारिजाते। परिणीय सगोत्रान्तु समानप्रवरां तथा।
त्यागं कृत्वा द्विजस्तस्यास्ततश्चान्द्रायणं चरेत्। आचारमाधवीये
शातातपीयमिति कृत्वैतल्लिखितं, किन्तु कृत्वा तस्याः समुत्सर्गं
तप्तकृच्छ्रं विशोधनमिति तत्रोत्तरार्द्धपाठः। शातातपः
समानप्रवरां कन्यामेकगोत्रामथापि वा। विवाहयति यो मूढ़-
स्तस्य वक्ष्यामि निष्कृतिम्। उत्सृज्य तां ततो भार्य्यां मातृवत्
परिपालयेत्। आपस्तम्बः। समानगोत्रप्रवरां कन्यामुद्वोपगम्य
च। तस्यामुत्पाद्य चण्डालं ब्राह्मण्यादेव हीयते।

एवञ्च विष्ण्वादिवाक्यैकवाक्यतया असमानार्षगोत्रजामिति
याज्ञवल्क्यीयेऽपि आर्षञ्च गोत्रञ्च आर्षगोत्रे समाने आर्षगोत्रे
ययोस्तौ समानार्षगोत्रौ ताभ्यां जाता या न भवति तामुद्वहे-
दित्यर्थः। न तु असमानार्षं गोत्रं यस्य तस्माज्जातामिति व्युत्पत्त्या

असमानप्रवरसगोत्रजातोद्वाहपरत्वं तस्य । वाक्यभेदापत्तेरनेकवचनेषु गोत्रपदस्य समानप्रवरगोत्रपरत्वकल्पनानुपपत्तेः सगोत्रानिषेधवैयर्थ्यापत्तेश्च । वशिष्ठः । गृहस्थो विनीतक्रोधहर्षो गुरुणाऽनुमतोऽसमानार्षेयीमस्पृष्टमैथुनामवरवयस्कां सदृशीं भार्य्यां विन्देत ।

ननु मुनीनां गोत्रप्रवर्त्तकत्वे क्षत्रियवैश्ययोः कथं गोत्रं प्रवरश्चेति चेत्, किमिति न भवति यदि स्मर्य्यते । प्रसिद्ध्या हि तन्निर्णीयते । सा च तयोरप्यविशिष्टा । साऽपि कथमिति चेत्, किमनेन प्रसक्तानुप्रसक्तेन । प्रसिद्धिस्तावदस्तीति निर्विवादम् । अथापि खल्वेकस्यैवापत्येषु कश्चिद्ब्राह्मणः कश्चिच्च क्षत्रियादिर्बभूवेति पुराणेतिहासकर्त्तारः स्मरन्ति । प्रवरस्तु यज्ञाधिकारात् तत्र च प्रवरणविधानात् तेषामप्यस्ति । किन्तु तत्र पौरोहित्यः स भवति । कल्पसूत्रकारवचनप्रामाण्यात् । तथाचाश्वलायनः । यजमानस्यार्षेयान् प्रवृणीते यावन्तः स्युरिति सूत्रयित्वाऽनतिदूरे पौरोहित्यान् राजन्यविशामिति सूत्रयाञ्चकार । अत्र वचनबलात् पौरोहित्यार्षेयप्रवरणेऽपि पूर्व्वोक्तरीत्या तेषां गोत्रप्रवरास्तित्वमवगन्तव्यम् । अथानेन पौरोहित्य एव प्रवरस्तेषामिति सुतरां गोत्रमपि तथैवेति चेदेवमपि न काचिद्वस्तुक्षतिरिति ।

पौरोहित्यान् राजन्यविशामित्यनेन पुरोहितगोत्रप्रवरौ राजन्यविशामतिदिश्येते इति तु न भ्रमितव्यम् । तथाविधवचनव्यक्तेरभावात् पौरोहित्यार्षेयप्रवरणमात्रस्योपदेशाच्च । अत एव, राजर्षीन् वा राज्ञां, सर्वेषां मानवेति संशये इति तदुत्तरसूत्राभ्यामार्षेयप्रवरण एव विशेषोऽभिहितः । तस्मान्नास्त्यत्रातिदेशगन्धोऽपि । प्रवराध्याये मत्स्याषाढः । अज्ञातबन्धोः

पुरोहितप्रवरेणाचार्य्यप्रवरेण चेति। निर्णयसिन्धौ स्मृतिः। आचार्य्यगोत्रप्रवरानभिज्ञस्तु द्विजः स्वयम्। दत्त्वाऽऽत्मानन्तु कस्मैचित्तद्गोत्रप्रवरो भवेत्। यद्वा स्वगोत्रप्रवरविधुरो जमदग्निजः। विवाहञ्च स तेनैव गोत्रेण तु समाचरेत्।

अथ, तत्र तत्र द्विजात्यादिग्रहणात् शूद्रस्य सपिण्डादिवर्जनं कथमिति चेत्, द्विजातिविहितस्यैव विवाहसंस्कारस्य शूद्रेऽप्यभिधानादिति ब्रूमः। तथाच यमः। शूद्रोऽप्येवंविधः प्रोक्तोविना मन्त्रेण संस्कृतः। न केनचित्समसृजत् च्छन्दसा तं प्रजापतिः। द्विजातीनां संस्कारकलापमभिधायैवंविध इत्याह। अतएव मनुः। धर्मेप्सवस्तु धर्म्मज्ञाः सतां वृत्तिमनुष्ठिताः। मन्त्रवर्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च। सतां त्रैवर्णिकानां वृत्तेरनिषिद्धस्याचारस्यानुष्ठानं शूद्रस्यानुजानाति। ब्रह्मपुराणम्। विवाहमात्रं संस्कारं शूद्रोऽपि लभतां सदा। मात्रशब्दो न विवाहेतरसंस्कारनिवर्त्तकः किन्त्वन्यत्र मन्त्रसंबन्धनिषेधपरः यमवचने गर्भाधानादिसंस्कारप्रतिपादनादिति शूलपाणिः।

शूद्रस्य गर्भाधानादिसंस्कारकलापो वा विवाहमात्रं वेति विकल्पन्तु युक्तमुत्पश्यामः। विवाहमपि शूद्रस्यामन्त्रमाह व्यासः। गर्भाधानं पुंसवनं सीमन्तो जातकर्म्म च। नामक्रिया निष्क्रमोऽन्नप्राशनं वपनक्रिया। कर्णवेधो व्रतादेशो वेदारम्भक्रियाविधिः। केशान्तः स्नानमुद्वाहो विवाहाग्निपरिग्रहः। त्रेताऽग्निसंग्रहश्चैव संस्काराः षोड़श स्मृताः। नवैताः कर्णवेधान्ता मन्त्रवर्जं क्रियाः स्त्रियाः। विवाहो मन्त्रतस्तस्याः शूद्रस्यामन्त्रतो दश। वपनक्रिया चूड़ाकरणम्। व्रतादेश उपनयनम्। स्नानमाप्लवनापरनामधेयं समावर्त्तनमप्याख्यायते। मन्त्रवर्जमित्यत्र

विशेषमाह चूड़ाकरणान्तमभिधाय गोभिलः। एतयैवावृता स्त्रियास्तूष्णीं मन्त्रेण तु होमः। तुशब्दश्चशब्दार्थः समुच्चये। तेन वृद्धिश्राद्धमपि मन्त्रवदेव भवतीति भट्टभाष्यम्। गोभिलगृह्ये कर्णवेधस्य संस्कारगणेष्वपरिगणितत्वाद्गोभिलीयानाम् अष्टावेव संस्कारा मन्त्रवर्जं, विवाहः समन्त्रकः स्त्रियाभवति। यत्तु मनुवचनं, न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हतीति। तदुपनयनसंस्कारपरमिति मेधातिथिः। एवं सामान्यतो यन्निषिद्धमनृतवदनादि तदतिक्रमे विप्रादेरिव शूद्रस्य न पातकमिति तेनैव व्याख्यातम्। युक्तस्तु विकल्प इति प्रतिभाति। तत्र देशाचारादिना व्यवस्थोन्नेया।

पुनर्व्यासः। शूद्रोवर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति। वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना। वेदमन्त्रवर्जनोपदेशात् पौराणिकमन्त्रो न वर्जनीयः। सोऽपि ब्राह्मणेन पठनीयः, अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यत इति मरीचुक्तेः। इयं च परिभाषा सर्वकर्म्मार्थेति कमलाकरभट्टाः। शूद्राणां कर्म्मणि वेदमन्त्रास्तु ब्राह्मणेनापि न पठनीयाः। वेदमन्त्रवर्जं शूद्रस्येति स्मृतौ, सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रयोर्नेच्छन्तीति नृसिंहतापनीये, विना मन्त्रेणेति यमवचने,पूर्व्वोक्तव्यासवचने,अन्यत्र च वेदमन्त्रवर्जनोपदेशात्। अनुमतोऽस्य नमस्कारो मन्त्र इति गौतमवचने नमस्कारस्य मन्त्रत्वोक्तेश्च। पञ्चयज्ञस्नानयोस्तु पौराणिकमन्त्रोऽपि ब्राह्मणेन न पठनीयः। नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेदिति याज्ञवल्क्यवचनात्। ब्रह्मक्षत्त्रविशामेव मन्त्रवत् स्नानमिष्यते। तूष्णीमेव हि शूद्रस्य सनमस्कारकं मतमिति योगियाज्ञवल्क्यवचनाच्च।

संस्काराणां वैदिकमन्त्रमात्रसाध्यत्वात् तत्र ब्राह्मणेनापि मन्त्रा नैव पठितव्याः । अतएव, यमेन विना मन्त्रेण संस्कृत इत्यभिधाय केनचिच्छन्दसा प्रजापतिः शूद्रं नासृजदिति हेतुतयोपन्यस्तम् । श्राद्धेऽप्येवम् । यत्तु आद्यश्राद्धमभिधाय वराहपुराणे, अयमेव विधिः प्रोक्तः शूद्राणां मन्त्रवर्जितः । अमन्त्रस्य तु शूद्रस्य विप्रोमन्त्रेण गृह्यते इति । तदाद्यश्राद्धप्रयोगविधौ, इहलोकं परित्यज्य गतोऽसि परमां गतिमित्यादि पौराणिकमन्त्रस्याप्यभिधानात् तत्परम् । न च वेदमन्त्रवर्जमित्यादौ वेदेतिविशेषणात् पौराणिकमन्त्राः शूद्रेण स्वयमेव पठनीया इति वाच्यम्। वेदेतिविशेषणात् पौराणिकमन्त्रस्याभ्यनुज्ञानमात्रावगतेः स्वयं पाठकल्पनायां मानाभावात् । पूर्वलिखितमरीचिवचनेन ब्राह्मणकर्त्तृकपाठविधानात् । अध्येतव्यं न चान्येन ब्राह्मणक्षत्रियं विना । श्रोतव्यमिह शूद्रेण नाधेतव्यं कदाचनेति पुराणोपक्रमे भविष्यपुराणवचनाच्च । न चेदं मन्त्रेतरपरमिति वाच्यम् । तन्मात्रपरत्वे प्रमाणाभावात् ।

प्रकृतमनुसरामः । तदेवमुक्तप्रबन्धेन शूद्रस्य विवाहे विहिते तत्कालोद्दिष्टव्यादिकञ्चार्थात् प्राप्नोति । गार्हस्थ्यमुचितन्त्वेकं शूद्रस्य क्षणदाचरेति वामनपुराणीयेन शूद्रस्य गार्हस्थ्यविधानात् विवाहेनैव तन्निष्पत्तेर्न सगोत्रां न समानप्रवरां भार्य्यां विन्देत मातृतस्त्वापञ्चमात् पितृतस्त्वासप्तमादित्याद्यनेकवचनेषु सामान्यतोऽभिधानाच्चार्थात् द्विजातिपदमुपलक्षणम् । एतदभिप्रायेणैव गृहस्थ उद्वहेद्भार्य्यामित्युक्तम् ।

एवञ्च सपिण्डावत् सगोत्रासमानप्रवरयोरपि शूद्रस्य वर्जनीयतायां प्राप्तायां, समानगोत्रप्रवरां शूद्रामुद्वा न दोषभाक् । शूद्रः स्यात् शूद्रजातिस्तु सकुल्ये दोषभाग्भवेदिति कृत्यचिन्तामणि-

लिखितवचनात् सगोत्रासमानप्रवरा तस्य विवाह्येति निश्चीयते। सकुल्ये समानकुलोत्पन्ने। यच्च तत्त्वकारैरुक्तम्। उपदिष्टातिदिष्टगोत्रस्यैव निषेधो न त्वतिदिष्टातिदिष्टशूद्रगोत्रादेरिति। तच्चिन्त्यम्। राजन्यविशामतिदेशाभावस्योक्तत्वात् शूद्रगोत्रस्यातिदिष्टातिदिष्टत्वानुपपत्तेः। यच्चापरमुक्तमन्यथाऽतिदेशे चत्त्रवैश्यमात्रोपादानं व्यर्थं स्यादिति। तदपि चिन्त्यम्। अतिदेशस्याभावेन व्योम्नि चित्ररचनावत् वाक्यस्याशिरस्कत्वात्। किञ्च दर्शपौर्णमासादावार्षेयप्रवरणे खल्वाश्वलायनेन तथोक्तम्। तस्माच्छूद्रो यज्ञेऽनवक्लृप्त इति श्रुतेरग्निसंयोगाभावादमन्त्रत्वाच्च शूद्रस्य यज्ञाधिकार एव नास्ति कुतएव तत्र शूद्रस्योपादानप्रसङ्गः, येन चत्त्रवैश्यमात्रोपादानं व्यर्थं स्यादिति शक्यते वक्तुम्। तयोरेव तत्कर्त्तव्यतया तन्मात्रोपादानस्य सार्थकत्वमेवेति कुतोऽव्यर्थता। तस्मान्न किञ्चिदेतत्।

यदप्युक्तं, शूद्राणां मासिकं कार्य्यं वपनं न्यायवर्त्तिनाम्। वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टञ्च भोजनमिति मनुवचने चकारसमुच्चितगोत्रे वैश्यधर्म्मातिदेशात् पूर्वपुरुषपुरोहितगोत्रभागित्वं शूद्रस्येति। तदपि चिन्त्यम्। द्विजोच्छिष्टञ्च भोजनमितिवदुक्तसमुच्चयेनैव चकारस्योपपत्तेस्तस्यानुक्तगोत्रसमुच्चायकत्वे मानाभावात्। न्यायवर्त्तिनामिति विशेषणोपादानेन तावताऽपि शूद्रमात्रस्य गोत्रालाभाच्च। वैश्यवच्छौचकल्पो हि न्यायवर्त्तिनामेव शूद्राणां न त्वन्येषां, तेषामन्यविधशौचकल्पस्मरणात्। इत्यस्तु किं विस्तरेण।

ब्रह्मन्नुः। असंबन्धा भवेद्या तु पिण्डेनैवोदकेन वा। सा विवाह्या द्विजातीनां त्रिगोत्रान्तरिता च या। देवलः। सप्त-

कर्षेऽपि कर्त्तव्यं त्रिगोत्रात् परतो यदि । मत्स्यपुराणस्येदमिति तत्त्वकृत: । सन्निकर्षेऽपि सप्तमाद्यन्तर्गतत्वेऽपि । अत्र च गणन प्रतियोगिपित्रादिगोत्रमादायैव त्रिगोत्रगणनं कर्त्तव्यम् । यदपेक्षया सन्निकर्ष: यस्य च पिण्डोदकयोरसंबन्धस्तस्योपस्थितत्वात्तद्गोत्रा- पेक्षयैव त्रिगोत्रपरत्वप्रतीति: । एवं, सर्वसामञ्जस्याय सकलगणन- प्रतियोग्यपेक्षया त्रिगोत्रान्तरितैवोद्वाह्या न यत्किञ्चित्प्रतियोग्य- पेक्षया । अन्यथा पितु: प्रपितामहदौहित्रीकन्याया: पितामह- भगिनीपुत्त्रूपबन्ध्वपेक्षया त्रिगोत्रान्तरितत्वात् पितृगोत्रापेक्षया त्रिगोत्रान्त:पाताद्वानध्यवसाय: स्यात् । किं त्रिगोत्रान्तरितत्वादु- द्वाह्या किं वा त्रिगोत्रानन्तरितत्वादनुद्वाह्येति । एवमन्यत्रापूह्यम् ।

यत्र चैकं गोत्रं वारद्वयं निपतति, तत्र वारद्वयपातेऽपि गोत्र- स्यैकत्वान्न तत्र त्रिगोत्रान्तरितत्वमिति बोध्यम् । मैथिलास्तु, नोद्वाह्या विदुषां कुले च नियतं गोत्रत्रयान्तोऽपि चेदिति कारिकां पठन्तो ब्राह्मणस्य त्रिगोत्रान्तरितोद्वाहं नेच्छन्ति । तत्र मूलं चिन्त्यम् । दाक्षिणात्यास्तु, कस्यापि त्रिगोत्रान्तरिताविवाहं नानुमन्यन्ते ।

यम: । मातु: समानपतिका माता साऽपि प्रकीर्त्तिता । हित्वा पञ्चैव तस्याश्च विवाह: कैश्चिदिष्यते । तेन मातु: सपत्न्या: कुलेऽपि मातृकुलवत् पञ्चमीपर्य्यन्ताया: परित्याग: । कैश्चिदित्यनेन कल्पान्तरमप्यस्तीति प्रतीयते । तदाह सुमन्तु: । सर्व्वा: पितृपत्नीमातरस्तद्भ्रातरो मातुलास्तद्दुहितरो भगिन्य- स्तदपत्यानि भागिनेयानि अन्यथा सङ्करकारिणो भवन्ति तथाऽध्यापयितुरेतदेवेति । पितृमातृसंबन्धा आसप्तमादविवाह्या: कन्यका भवन्तीत्यभिधायानतिदूरे एतदभिधानात् एता: कन्यका-

अविवाह्या इत्यर्थादवगम्यते । विवाहप्रकरणे भगिनीत्वादिकीर्त्तनस्याविवाह्यत्वज्ञापनमात्रप्रयोजनत्वाद्वा तासामविवाह्यत्वमवसीयते । भागिनेयानीत्यनन्तरं, तास्वाविवाह्या इति तत्त्वकृद्भिः पठितम् । तदा व्यक्तएवार्थः । सुमन्तुवचने तद्भ्रातरो मातुला इत्यनन्तरं, तद्भगिन्यो मातृष्वसार इत्यधिकं केचित् पठन्ति । तदनाकरम् । किन्तु सपत्नीमातुर्भगिनी न विवाह्या । पितृपत्नीनां मातृत्वे तद्भगिनीनां मातृष्वसृत्वस्यार्थादवगतेः । एवम्भूतविषये विहिताविहितत्वसंशये विहिताकरणे चत्यभावादविहितकरणे दोषातिशयाच्च विहिताकरणस्यैव न्याय्यत्वात् । लोकविद्दिष्टत्वात् । वक्ष्यमाणरीत्या विरुद्धसंबन्धसद्भावात् । मातुः सपत्न्या भगिनीं तत्सुताञ्च विवर्जयेत् । पितृव्यपत्न्या भगिनीं तत्सुतां च विवर्जयेदिति बौधायनवचनाच्च । अनेन सपत्नीमातुर्भगिनीसुताऽपि नोद्वाह्येत्युक्तम् ।

अत्र यावदुक्तमेव वर्जनीयम् । अन्यथा सपत्नीमातुर्मातृत्वातिदेशेनैव सिद्धेस्तद्भ्रातरो मातुलाइत्यादेरनर्थकत्वापत्तेः । अन्यथा तासां विवाहे वोढारः सङ्करनामकाधर्म्मकारिणो भवन्तीर्थः । सङ्करकारिण्य इति तत्त्वकारपाठे ताविवाहिताः वोढुः सङ्करकारिण्यो भवन्तीति व्याख्येयम् । अन्यथा इत्यत्र ताः परिणीता इति पठितं हरिनाथोपाध्यायैः । ताः कन्यका विवाहिता इति च स्मृतिसारे । एवञ्च तदपत्यानि भागिनेयानीत्यन्तेन ग्रन्थेन याः कन्यकाः परिनिर्दिष्टास्ताः परिणीताः सङ्करकारिण्यो भवन्तीत्येतदेकं वाक्यम् । अध्यापयितुर्गुरोः कन्यायाविवाहेऽप्येतदेव सङ्करकारित्वमेवेत्यर्थः । अत्र च सपत्नीमातृभ्रातुर्मातुलत्वेनार्थात् भगिनीसपत्नीकन्याया भागिनेयीत्वावगतेः साऽपि नोद्वाह्या ।

आश्वलायनगृह्यपरिशिष्टम्। अविरुद्धसंबन्धामुपयच्छेत्। विरुद्धसंबन्धश्च तत्रैवोक्तो यथा। दम्पत्योर्मिथः पितृमातृसाम्यं विरुद्धः संबन्धो यथा भार्य्यास्वसुर्दुहिता पितृव्यपत्न्याः स्वसा चेति। मिथः परस्परम्। यत्र वरो वध्वाः पितृस्थानीयः वधूर्वा वरस्य मातृस्थानीया भवति तत्र विरुद्धः संबन्ध इत्यर्थः। तत्रोदाहरणं यथेत्यादि। एवञ्च ज्येष्ठभ्रातृपत्न्या मातृतुल्यत्वात्तद्भगिन्यपि न विवाह्या। एवं सखिकन्याऽपि न विवाह्या। मातृष्वसुः सपत्न्याः कन्या तस्याः पुत्रस्य कन्या च नोद्वाह्या भवति इत्याहुः।

मात्स्ये। समानप्रवरा चैव शिष्यसन्ततिरेव च। ब्रह्मदातुर्गुरोश्चैव सन्ततिः प्रतिषिध्यते। पठन्ति च। गायत्र्या उपदेष्टुश्च कन्यां नैवोद्वहेत् द्विजः। गुरोश्च कन्यां शिष्योवा तत्सन्तत्याऽपि नेष्यते। पुरुषत्रयपर्य्यन्तं भ्रात्रादेर्नैतदिष्यते। वाक्संबन्धकृतानान्तु स्नेहसंबन्धभागिनाम्। विवाहोऽत्र न कर्त्तव्यो लोकगर्ह्यो प्रसज्यते। अत्र मूलं चिन्त्यमिति कमलाकरभट्टाः। पुरुषत्रयपर्य्यन्तमिति च्छेदः। तत्सन्तत्येति गर्तनान्वेति। भ्रात्रादेर्नैतत् न भ्रात्रादिगुरुसन्ततिवर्जनमित्यर्थः। व्यवहारनिबन्धे। जामातुर्भगिनीं चैव श्वश्र्वास्तु भगिनीं तथा। पत्नीनां भ्रातृवर्गाणां सुताञ्चैव विवर्जयेत्। तथा मित्रसुतां चैव गुरुपुत्रसुतां तथा। गुरुपुत्रयोः सुतामित्यर्थः। प्रत्यासत्त्या पुत्रशब्दो गुरुपुत्रपरः। मत्स्यसूक्ते। यस्मै दत्ता च भगिनी तस्य या भगिनी भवेत्। परिणेया न सा सद्भिः संबन्धः सोऽधमः स्मृतः।

स्मृतिः। परपूर्व्वां वयोज्येष्ठां मातृनाम्नीं सगोत्रजाम्। अन्नं विष्ठा पयोमूत्रं मैथुनं मातृसङ्गमः। अत्रोद्वहेदित्यदोत्यध्याहार्य्यमिति स्मृतिदर्पणः। वृद्धमनुः। मातृनाम्नी च या कन्या पितृनामा च

योवरः । तयोर्विवाहो नैव स्यान्मनुराह प्रजापतिः । मत्स्यसूक्ते । पितुर्ज्येष्ठपितुश्चैव पितुश्चापि कनीयसः । नामान्वितो वरो यस्तु पितृनामा स उच्यते । तत्रैव । मातुर्यन्नाम गुह्यं स्यात् सुप्र-सिद्धमथापि वा । तन्नाम्नी या भवेत् कन्या मातृनाम्नीं प्रचक्षते । मातृनाम्नीमित्यत्र तामित्यादिः । तथा, सपत्नीमातुर्यन्नाम तन्नि-षिद्धमिहोच्यते । तथा, प्रमादाद्यदि गृह्णीयात् प्राजापत्यं समा-चरेत् । चान्द्रायणं व्रतं कृत्वा तां कन्यां परिवर्ज्जयेत् । प्रसिद्ध-नाम्नीग्रहणे त्यजेत्तां नावलोकयेत् । ऋषिचान्द्रायणान्ते तु गुप्त-नाम्नामयं विधिः । शुभेऽह्नि कलसं स्थाप्य ऐन्द्रभे वारुणेऽपि वा । विष्णुं प्रजापतिं गौरीं सतीं लक्ष्मीं विनायकम् । पूजये-द्धूपदीपैश्च यवगोधूमपायसैः । दद्यात् पयस्विनीं गाञ्च तिल-धेनुमथापि वा । तिलकाञ्चनकं वाऽथ दत्त्वा नाम च कारयेत् । लिखित्वा फलिकायाञ्च श्रावयेत् कर्णरन्ध्रके । अभिषिञ्चेत् कुम्भ-तोयैस्तेषामाहुतिपूर्वकम् । घृतैस्तिलयवैश्चैव प्रत्येकमृतुसंख्यया ।

प्राजापत्यं सपत्नीमातृनाम्नीग्रहणविषयम् । मातुर्नाम च गुह्य-प्रसिद्धभेदात् द्विविधं, तत्र प्रसिद्धनाम्नीग्रहणे चान्द्रायणव्रतं कृत्वा तस्यास्त्यागः कर्त्तव्यः । तदेवाह प्रसिद्धनाम्नीत्यादिना । न च पौनरुक्त्यं, त्यागस्य प्रसिद्धनाम्नीविषयत्वेनोपसंहारात्, सामान्य-विधिरस्पष्टः संक्रियेत विशेषत इति न्यायात् । गुप्तनाम्नीग्रहणे विधिमाह ऋषिचान्द्रायणान्ते त्विति । ऐन्द्रभं जेष्ठानक्षत्रं, वारुणं शतभिषा । पयस्विनीमित्यनेन सवत्सामिति लभ्यते । धेनुतिल-धेनुतिलकाञ्चनानां शक्त्यपेक्षया विकल्पः । नामकरणप्रकार-माह लिखित्वेति । तेषां विष्णादीनाम् । आहुतिपूर्वकमित्य-भिधानादादौ होमः पश्चादभिषेकः । ऋतुसंख्यया षट्सख्यया ।

एतच्च ग्रहणात् परतो ज्ञानं करणीयम् । ग्रहणे कृते तद्विधानात् परित्यागोपदेशोपपत्तेश्च । एवञ्चैतदेकवाक्यतया, मातृनाम्नी यदा कन्या विवाहे कुलजा हि सा । विप्रैर्नामान्तरं कार्य्यं तस्याः पित्रोरनुज्ञया इति राजमार्त्तण्डीयमपि गुप्तनाम्नीविषयमेव पर्य्यवस्यति । अतएव, विवाहे कुलजा हि सा इत्युक्तम् । विवाहे कुलजा कुलान्तरे जाता । अन्त्यस्थमध्यपाठे कुलान्तरं गतेत्यर्थः । यत्तु, राजमार्त्तण्डोक्तं वाग्दानोत्तरज्ञाने बोध्यम्, अन्यथा पूर्व्वोक्तनिषेधवैयर्थ्यापत्तेरिति तत्त्वकारैरुक्तम् । तच्चिन्त्यम् । प्रमाणाभावात् । न च पूर्व्वोक्तनिषेधवैयर्थ्यापत्तिरेव प्रमाणमिति वाच्यम् । तस्या अविवाह्यत्वेनैव निषेधस्य सार्थक्यात् । न च नामान्तरमवश्यं कर्त्तव्यमिति किञ्चिन्नियामकमस्ति । किञ्च तन्मते वाग्दानोत्तरज्ञानवत्सम्प्रदानोत्तरज्ञाने विवाहोत्तरज्ञाने वा राजमार्त्तण्डीयं कुतो न प्रवर्त्तते । पूर्व्वोक्तनिषेधवैयर्थ्यापत्तेस्तावन्मात्रविषयत्वावधारणानुपपत्तेः । किञ्च वाग्दानोत्तरज्ञाने इति कल्पनामात्रं ग्रहणे इति वाचनिकम् । तस्मात् प्रसिद्धनाम्नीग्रहणे परित्यागएव गुप्तनाम्नीग्रहणे तु यथोक्तरीत्या नामान्तरकरणमित्यादरणीयम् ।

अथ कन्यागुणदोषौ ॥ तत्र याज्ञवल्क्यः । अविप्लुतब्रह्मचर्य्यो लक्षण्यां स्त्रियमुद्वहेत् । अनन्यपूर्व्विकां कान्तामसपिण्डां यवीयसीम् । अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् । अविप्लुतब्रह्मचर्य्योऽस्खलितब्रह्मचर्य्यः । एतच्च प्राशस्त्यार्थम् । अन्यथा, भार्य्यायै पूर्व्वमारिण्यै दत्त्वाऽग्नीनन्त्यकर्म्मणि । पुनर्दारक्रियां कुर्य्यात् पुनराधानमेव चेति मनुवचने पुनर्दारक्रियाकरणोपदेशानुपपत्तेः । लक्षण्यां लक्षणे साध्वीं प्रशस्तलक्षणामित्यर्थः । तथा च काशीखण्डम् । सदा गृही सुखं भुङ्क्ते स्त्री लक्षणवती यदि ।

अतः सुखभमृद्धार्थमादौ लक्षणमीक्षयेत्। लक्षणवती प्रशस्तलक्षणा, प्रशंसायां मत्वर्थविधानात्। अनन्यपूर्विकां नास्ति अन्यः पूर्वो यस्यास्तां, पुरुषान्तरायावाग्दत्तां पुरुषान्तरेणापरिगृहीतामभुक्ताञ्चेत्यर्थः। कान्तां कमनीयां मनश्चक्षुषोरानन्दकरीम्। तथाचापस्तम्बः। यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिरिति। यवीयसीं कनिष्ठाम्। अरोगिणीमतिशयितरोगरहिताम्। अतिशायने मत्वर्थविधानात्।

अभ्रातृमतीमिति पुत्त्रिकात्वाशङ्काव्युदासार्थम्। तथाच मनुः। यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता। नोपयच्छेत तां प्राज्ञः पुत्त्रिकाधर्म्मशङ्कया। पितरि ज्ञाते तद्वाक्यादेव पुत्रिकात्वाशङ्कानिरासः सम्भवतीति न विज्ञायेत वा पितेत्युक्तम्। अथवा। यस्या भ्राता न भवति तां पुत्त्रिकाशङ्कया नोपयच्छेत्, यस्यास्तु पिता न ज्ञायते अयममुष्या जनयितेति, तां गूढोत्पन्नामधर्म्मशङ्कया नोपयच्छेदित्यर्थः। कन्यापितुः पुत्रिकात्वाभिसन्धेरभावे त्वभ्रातृकाऽपि विवाह्यैव। यत्र कन्यापितुर्नास्ति पुत्रिकाधर्म्मयाचना। तत्राभ्रातृमतीं चापि कन्यां सद्यः समुद्वहेदिति शङ्खवचनात्।

व्यासः। अनन्यपूर्विकां लघ्वीं शुभलक्षणसंयुताम्। धृताधोवसनां गौरीं विख्यातदशपूरुषाम्। ख्यातनाम्नः पुत्त्रवतः सदाचारवतः सतः। दातुमिच्छोर्दुहितरं प्राप्य धर्म्मेण चोद्वहेत्। धृताधोवसनामनग्नां किञ्चिदुपजातलज्जामिति यावत्। स्तनयोरनुद्भेदादधृतोत्तरीयामिति द्योतयितुमधःपदम्। अतएव गौरीम्। अतएव स्मरन्ति। एष्टव्याबहवः पुत्रा यद्यप्येकोगयां व्रजेत्। गौरीं वाऽप्युद्वहेद्भार्य्यां नीलं वा वृषमुत्सृजेत्। यजेत वाऽश्वमेधेनेति तृतीयचरणे पाठान्तरम्। यस्याः पितृकुले पञ्च मातृकुले

च पञ्चेत्येवं दश पुरुषा विख्यातास्ताम् । तदसम्भवे ख्यातनाम्न इति । स्मृतिः । धर्म्मार्थकाममोक्षाणां दाराः सम्प्राप्तिहेतवः । परीक्ष्यन्ते प्रयत्नेन पूर्व्वमेव करग्रहात् ।

शातातपः । हंसस्वनां मेघवर्णां मधुपिङ्गललोचनाम् । तादृशीं वरयेत् कन्यां गृहस्थः सुखमेधते । मनुः । अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम् । तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत् स्त्रियम् । भविष्ये । प्रतिष्ठिततला: सम्यक् रक्ताम्भोजसमत्विषः । तादृशाश्चरणाधन्या योषितां भोगवर्द्धनाः । प्रतिष्ठितो भूमौ लग्नः तलः समस्ताधोभागो येषां ते तथा । तथा, अङ्गुल्यः संहता वृत्ता ऋज्व्यः सूक्ष्मनखास्तथा । कुर्व्वन्त्यत्यन्तमैश्वर्य्यं राजभोगं च योषिताम् । सुभगत्वं नखैः स्निग्धैराताम्रैश्च धनाढ्यता । पुत्रायुरुन्नतैरेभिः सुसूक्ष्मैरपि सौम्यताम् । तथा, नीलोत्पलदलप्रख्यैराताम्रैश्चारुपक्ष्मभिः । वनिता नयनैरेभिर्भोगसौभाग्यभागिनी । बृहत्संहितायाम् । स्निग्धोन्नताग्रतनुताम्रनखौ कुमार्य्याः पादौ समोपचितचारुनिगूढ़गुल्फौ । श्लिष्टाङ्गुली कमलकान्तितलौ च यस्यास्तामुद्वहेद्यदि भुवोऽधिपतित्वमिच्छेत् । नन्दिकेश्वरपुराणे । श्यामा सुकेशी तनुलोमराजी सुभ्रूः सुशीला सुगतिः सुदन्ता । वेदीविमध्या यदि पङ्कजाक्षी कुलेन हीनाऽपि विवाहनीया । दुष्टा कुदन्ता यदि पिङ्गलाक्षी लोम्ना समाकीर्णपदाङ्गयष्टिः । मधेरा च पुष्टा यदि राजकन्या कुलेऽपि योग्या न विवाहनीया ।

भविष्ये । अत्यन्तकुचितैरूक्षैः स्फुटिताग्रैर्गुड़प्रभैः । अनेकजैस्तथा लोमैः केशैश्चापि तथाविधैः । समाद्वाभ्यन्तरे जाया पतिं हन्यान्न संशयः । कुचितैः सङ्कुचितैः कुटिलैरिति यावत् ।

अनेकजैरेकस्मिन्नेव कूपेऽनेकीभूय जातैः। लोमैः लोमभिः। तथा, वक्राक्षी विषमाक्षी च धूम्राक्षी प्रेतलोचना। वर्जनीया सदा नारी खर्नेत्रा चैव दूरतः। खवराहवृकोलूकमर्कटास्याश्च याः स्त्रियः। क्रूरास्ताः पापकारिण्यः प्रजाबन्धुविवर्जिताः। सुविशालोदरी नारी निरपत्या च दुर्भगा। प्रलम्बजठरा हन्ति श्वशुरश्चापि सोदरम्। परस्परं समारूढ़ाः पादाङ्गुल्यो भवन्ति हि। हत्वा बहूनपि पतीन् परप्रेष्या सदा भवेत्। वृक आरण्यकुक्कुरः, उलूकः पेचकः। बृहत्संहितायाम्। प्रदेशिनी वा तदनन्तरा वा मही न यस्याः स्पृशतेऽङ्गनायाः। गताऽथवाऽङ्गुष्ठमतीत्य यस्याः प्रदेशिनी सा कुलटाऽतिपापा। कृत्यचिन्तामणौ। नेत्रे यस्याः केकरे पिङ्गले वा सा दुःशीला श्यावलोलेक्षणा च। कूपौ यस्या गण्डयोः सस्मिताया निःसन्दिग्धं बन्धकीं तां वदन्ति। विस्तरस्तु काशीखण्डादाववगन्तव्यः। स्त्रीलक्षणविदस्त्वलाभे, तदलाभेपिण्डानित्यादि गोभिलाद्युक्तक्रमेण शुभाशुभं परीक्षणीयम्। मनुः। नोद्वहेत् कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम्। नालोमिकां नातिलोमां न वाचालां न पिङ्गलाम्। नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्व्वतनामिकाम्। न पक्ष्यहिप्रेष्यनाम्नीं न च भीषणनामिकाम्। पिङ्गलां पिङ्गलाक्षीम्। मत्स्यसूक्ते। गङ्गा च यमुना चैव गोमती च सरस्वती। नदीष्वासां नाम वृक्षे मालती तुलसी अपि। रेवती चाश्विनी भेषु रोहिणी शुभदा भवेत्।

मनुः। महान्त्यपि समृद्धानि गोजाविधनधान्यतः। स्त्रीसंबन्धे दशैतानि कुलानि परिवर्जयेत्। हीनक्रियं निष्पुरुषं निश्छन्दो-रोमशार्शसम्। क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च।

यस्मिन् कुले जातकर्म्मादयः संस्कारा न क्रियन्ते तद्धीनक्रियम् । यत्र योषिदेव प्रसूयते तन्निष्पुरुषम् । निश्छन्दोवेदाध्यायनरहितम् । रोमशं दीर्घरोमोपेतम् । अर्शआदयो व्याधिविशेषवचनाः शब्दा-मत्वर्थप्रत्ययान्ता निर्दिष्टाः । यमः । चतुर्दश कुलानीमान्यविवाह्यानि निर्दिशेत् । अनार्षेयब्राह्मणानामृत्विजाञ्चैव वर्जयेत् । अत्युच्चमति-ह्रस्वञ्च अतिवर्णञ्च वर्जयेत् । हीनाङ्गमतिरिक्ताङ्गमामयाविकुलानि च । श्वित्रिकुष्ठिकुलादीनां कुर्य्याच्च परिवर्जनम् । सदा कामिकुलं वर्ज्यं रोमशानाञ्च यत् कुलम् । अपस्मारिकुल यच्च यच्च पाण्डुकुलं भवेत् । अनार्षेयब्राह्मणानामविज्ञातप्रवरब्राह्मणानाम् । ऋत्विजां नित्ययाजकानाम् अयाज्ययाजिनाञ्च । अतिवर्णं कृष्णगौरादि-वर्णानामातिशय्ययुक्तम् । आमयावीत्यभिधाय गोवृषन्यायेन श्वित्र्यादीनां पृथगुपन्यासः । कामिकुलं कामप्रधानं कुलम् ।

मनुः । उत्तमैरुत्तमैर्नित्यं सम्बन्धानाचरेत् सह । निनीषुः कुलमुत्कर्षमधमानधमांस्त्यजेत् । आचारमाधवीये सएव । विशुद्धाः कर्म्मभिश्चैव श्रुतिस्मृतिनिदर्शितैः । अविप्लुतब्रह्मचर्य्या महाकुल-समन्विताः । महाकुलैश्च सम्बद्धा महत्त्वेन व्यवस्थिताः । सन्तुष्टाः सज्जनहिताः साधवः समदर्शिनः । लोभरागद्वेषामर्षमानमोहादि-वर्ज्जिताः । अक्रोधनाः सुप्रसादाः कार्य्याः संबन्धिनः सदा । तथा, ये स्तेनाः पिशुनाः क्लीबा ये च नास्तिकवृत्तयः । विकर्म्मणा च जीवन्तो-विकृताकृतयस्तथा । प्रबद्धवैराः शूरैर्ये राजकिल्बिषिणस्तथा । ब्रह्मस्वादननित्याश्च कदर्य्याश्च विगर्हिताः । अप्रजा येषु वंशेषु स्त्रीप्रजाप्रसवस्तथा । पतिघ्नश्च सुवासिन्यस्तांश्च यत्नेन वर्जयेत् ।

दृष्टार्थश्चायं निषेधः । हीनक्रियादिकुलात् कन्याग्रहणे हि, न पितरमनुवर्त्तन्ते मातृकं द्विपदा इति इतिस्मरणात्, सर्वे संक्रामिणो-

रोगावर्जयित्वा प्रवाहिकामिति, वैद्यकोक्तेश्चापत्यमपि तथैव स्यादिति दृष्ट एव दोषः । तथा पुराणे । मातुलान् भजते पुत्रः कन्यका भजते पितॄन् । यथाशीला भवेन्माता तथाशीला भवेत् सुता । माधवीये मनुः । पितुर्वा भजते शीलं मातुर्वोभयमेव वा । न कथञ्चन दुर्य्योनिः प्रकृतिं स्वां विमुञ्चति । तत्रैव हारीतः । कुलानुरूपाः प्रजाः सम्भवन्ति । माधवाचार्य्योऽपि एतच्च हीनक्रियादिवर्जनं तथाविधापत्यपरिहारार्थमित्याह । मनुभाष्येऽपि, पूर्व्वव्याख्यातृभिर्दृष्टमूलताऽस्य प्रतिषेधस्य वर्णितेत्युक्तम् ।

एवञ्च, ये दृष्टार्थास्ते तत्रैव प्रमाणं ये त्वदृष्टार्थास्तत्र वैदिकशब्दानुमानमिति स्मृत्यधिकरणे मीमांसाभाष्यकारैरुक्तत्वान्नात्र वेदानुमानमिति हीनक्रियादिकुलजायाविवाहः सिध्यत्येव । तद्वोढुः प्रायश्चित्तमपि न भवति, निषेधस्य दृष्टमूलतया वैदिकत्वाभावेन दृष्टदोषमात्रभागित्वाद्दुरितापूर्व्वकल्पनानुपपत्तेः । तथाच भविष्यपुराणे । दृष्टार्थां तु स्मृतिः काचिददृष्टार्था तथा परा । दृष्टादृष्टार्थका काचित् न्यायमूला तथा परा । अनुवादिनी चान्या स्मृतिः पञ्चविधा मता । सर्व्वा एता वेदमूला दृष्टार्थाः परिहृत्य तु । अतएव, कुलेन हीनाऽपि विवाहनीयेत्युक्तम् । मनुरपि । श्रद्दधानः शुभां विद्यामाददीतावरादपि । अन्त्यादपि परं धर्म्मं स्त्रीरत्नं दुष्कुलादपीति दुष्कुलादपि स्त्रीरत्नमादेयमाह ।

अत्र च कन्यागुणानां तस्याविवाहस्य प्राशस्त्यनिमित्तत्वं, न तु तच्छून्याया विवाह एव न भवति । दोषाणाञ्च प्रायः सर्व्वेषामेव दृष्टार्थतया दृष्टएव तत्र दोषो न तु विवाहानिष्पत्तिः । यास्त्वदृष्टार्थनिषिद्धाः सपिण्डासगोत्रादयस्तासां विवाहानिष्पत्तिर्भार्य्यात्वानुत्पत्तिश्च । भार्य्याशब्दस्य संस्कार-

युक्तत्वोवचनात्, संस्कारे च तासां पर्य्युदस्ततया तासु तदनुत्पत्तेः । न केवलं तासु भार्य्यात्वानिष्पत्तिः प्रायश्चित्तमपि तद्वोढु-र्भवति । अनन्यगतेर्वचनात् । एवञ्च विवाहानिष्पत्तेरनेन विवाहोऽपि तासां भवितुमर्हति । तथा च कात्यायनः । स तु यद्यन्य-जातीयः पतितः क्लीब एव वा । विकर्म्मस्थः सगोत्रो वा दासो-दीर्घामयोऽपि वा । ऊढाऽपि देया साऽन्यस्मै सप्रावरणभूषणा । किन्तु तासां पौनर्भवत्वात्तद्विवाहो जघन्यः । न चैवं मातृवदेनां परित्यज्य बिभृयादिति भरणोपदेशोनोपपद्यते इति वाच्यम् । अन्येन [illegible]हिताया अपि मातृवद्भरणेऽनुपपत्त्यभावात् । अयञ्च पुन-रुद्वाहः कलौ न भवति । ऊढायाः पुनरुद्वाहं जेष्ठांशं गोवध-न्तथा । कलौ पञ्च न कुर्व्वीत भ्रातृजायां कमण्डलुम् इत्यादि-पुराणवचनात् । कलौ त्वाज्ञस्येनैव तस्योपपत्तिः ।

नारदः । दीर्घकुत्सितरोगार्त्ता व्यङ्गा संसृष्टमैथुना । दुष्टाऽन्य-गतभावा च कन्यादोषाः प्रकीर्त्तिताः । काश्यपः । सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः । वाचा दत्ता मनोदत्ता कृतकौतुक-मङ्गला । उदकस्पर्शिता या च या च पाणिगृहीतिका । अग्निं परिगता या च पुनर्भूप्रसवा च या । इत्येताः काश्यपेनोक्ता-दहन्ति कुलमग्निवत् । कृतकौतुकमङ्गला कृतं कौतुकसूत्रेण मङ्गलं यस्याः सा तथा बद्धकौतुकसूत्रेत्यर्थः । उदकस्पर्शिता उदके-नोदककरणकदानेन स्पर्शिता प्रतिग्राहिता । कृतकौतुकमङ्गला बद्धकङ्कणा, उदकस्पर्शिता उदकस्पर्शपूर्व्वकं दत्तेति रत्नाकरः । पाणिगृहीतिका कृतपाणिग्रहणा । ताः खल्वेता अन्यपूर्वाः । आसा-मपि विवाहो भवत्येव । तथाच नारदः । कन्यैवाक्षतयोनिर्या पाणि-ग्रहणदूषिता । पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारमर्हति । पाणि-

गृहीतायास्तु विवाहः कलौ निषिद्धः । ऊढ़ायाः पुनरुद्वाह-मित्यादिवचनात् । पुनर्भूप्रसवा पुनर्भ्वा जाता । बौधायनः । वाग्दत्ता मनोदत्ताऽग्निं परिगता सप्तमं पदं नीता भुक्ता गृहीतगर्भा प्रसूता चेति सप्तविधा पुनर्भूः, तां गृहीत्वा न प्रजां न धर्मं विन्देत् ।

अथ वरगुणदोषौ ॥ अत्र लक्षणादिकन्यागुणानभिधायाह याज्ञवल्क्यः । एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियोवरः । यत्नात् परीक्षितः पुंस्त्वे युवा धीमान् जनप्रियः । एतदपि प्राशस्त्यार्थम् । ब्राह्मणक्षत्रियविशां शूद्राणाञ्च परिग्रहे । सजातिः श्रेयसी भार्य्या सजातिश्च पतिः स्त्रिया इति नारदवचनात् । दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे । अपि वा गुणहीनाय नोप-रुन्ध्याद्रजस्वलामिति बौधायनवचनाच्च । नग्निका अनागतार्त्तवा ।

यत्तु मनुवचनं, काममामरणात् तिष्ठेद्गृहे कन्यर्त्तुमत्यपि । न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचिदिति । तद्गुणवते दद्यादित्यस्य प्रशंसार्थं न तु ऋतुमत्या गृहावस्थानार्थम् । नोपरुन्ध्याद्रजस्वला-मिति बौधायनविरोधात् । वक्ष्यमाणवचनजाताच्च । इदं हि पूर्व्वमुक्तम् । उत्कृष्टायाभिरूपाय वराय सदृशाय च । अप्राप्तामपि तां कन्यां तस्मै दद्याद्यथाविधीति । न हि काममामरणादित्यनेन ऋतुमत्या गृहे स्थितिर्विधीयते, किन्तु दरऋतुमत्यपि कन्या आम-रणाद्गृहे तिष्ठेन्न त्वेवैनां निर्गुणाय दद्यादिति गुणवते दानं स्तूयते । यथा, वरं भक्ष्यमभक्ष्यञ्च पिबेद्वा गर्हितञ्च यत् । वर्ज्जनीयं प्रयत्नेन मूलकं मदिरासममित्यभक्ष्यभक्षणादिकं न विधीयते, किन्त्वभक्ष्य-भक्षणादितोऽपि मूलकभक्षणं गर्हितमिति मूलकभक्षणं निन्द्यते । तथर्त्तुमत्या गृहेऽवस्थानादपि गुणहीनाय दानं गर्हितमित्यनेन

गुणवते दानमेव स्मूयते। एवञ्च गुणहीनाय न दद्यादित्यपि गुणवत्प्रशंसार्थम्। अपि वा गुणहीनायेति स्मरणात्। नोपरुन्ध्याद्रजस्वलामित्यपि नग्निकादानप्रशंसार्थम्। तथाच गुणवते देया नग्निका देयेति मनुबौधायनवचनयोरर्थः।

अथैवं, वरयेत् कुलशीलाभ्यां न युज्येत कथञ्चन। न मन्त्राः कारणं तत्र न च कन्याऽनृतं भवेत्। समाच्छिद्य तु तां कन्यां बलादक्षतयोनिकाम्। पुनर्गुणवते दद्यादिति शातातपोऽब्रवीदिति शातातपेन, हीनस्य कुलशीलाभ्यां हरन् कन्यां न दोषभाक्। न मन्त्राः कारणं तत्र न च कन्याऽनृतं भवेदिति यमेन च गुणहीनाय दत्तां पुनराच्छिद्य गुणवते दद्यादित्युक्तं कथं सङ्गच्छते इति चेदेवन्तर्हि मतभेदोऽस्तु। तथा च वरमृतुमत्यपि देया तथापि गुणहीनाय न दातव्येति मनोर्मतं,गुणहीनाय दत्ताऽप्याच्छिद्य पुनर्गुणवते देयेति शातातपादीनां मतं,वरं गुणहीनाय देया न जात्वपि ऋतुमती दातव्येति बौधायनस्य मतम्। अनन्यगतेर्वचनात्,मुनीनां मतभेदस्य च बहुलमुपलम्भात्। मनोर्मतेऽपि ऋतुमत्या गृहेऽवस्थितिर्दोषायैवेति तद्वचनभङ्ग्याऽवगम्यते। परन्तु गुणहीनाय दाने ततोऽपि दोषातिशयः इति तस्य मतं लक्ष्यते। विष्णुः। यावन्त कन्यामृतवः स्पृशन्ति तुल्यैः सकामामपि याच्यमानाम्। तावन्ति भूतानि हतानि ताभ्यां मातापितृभ्यामिति धर्म्मवादः। सकामां तुल्यैर्याच्यमानामिति विशिंषन् व्यतिरेके नैष दोष इत्यभिप्रैतीत्यवगम्यते।

नारदः। परीक्ष्यः पुरुषः पुंस्त्वे निजैरेवाङ्गलक्षणैः। पुमांश्चेदविकल्पेन स कन्यां लब्धुमर्हति। सुबद्धजत्रुजान्वस्थिः सुबद्धांशशिरोरुहः। स्थूलघाटस्तनूरुत्वगविलम्बगतिस्वरः। रेतोऽस्योत्-

प्लवते नाप्सु ह्लादि मूत्रं च फेनिलम्। पुमान् स्याल्लक्षणैरेतै-र्विपरीतैस्तु षण्डकः। सुबद्धं सुश्लिष्टम्। जत्रु ग्रीवास्कन्धयोः सन्धिः। घाटो ग्रीवायाः पश्चाद्भागः। यमः। कुलञ्च शीलञ्च वपुर्वयश्च विद्याञ्च वित्तञ्च सनाथताञ्च। एतान् गुणान् सप्त परीक्ष्य देया कन्या बुधैः शेषमचिन्तनीयम्। कात्यायनः। दूरस्थानामविद्यानां मोक्षमार्गानुसारिणाम्। शूराणां निर्धनानाञ्च न देया कन्यका बुधैः। आचारचन्द्रिकास्मृतिरत्नाकरयोर्व्यासः। अत्यासन्ने विदूरे वा अत्याढ्ये चातिनिर्धने। कुलहीने च मूर्खे च षट्सु कन्या न दीयते। अतिवृद्धे चातिदीने रोगिणे देशगामिने। अतिक्रुद्धेऽप्यसन्तुष्टे षट्सु कन्या न दीयते। ब्रह्मवैवर्त्ते। वराय गुणहीनाय वृद्धायाज्ञानिने तथा। दरिद्राय च मूर्खाय रोगिणे कुत्सिताय च। अत्यन्तकोपयुक्ताय चात्यन्तदुर्भगाय च। पङ्गवे चाङ्गहीनाय अन्धाय बधिराय च। जड़ाय चैव मूकाय क्लीबतुल्याय पापिने। ब्रह्महत्यां लभेत् सोऽपि यः स्वकन्यां ददाति च। ज्ञानिने ब्रह्मज्ञानयुक्ताय। मोक्षमार्गानुसारिणामिति स्मरणात्। ब्रह्मस्वादननित्यायेति दर्शनाच्च। नारदः। उन्मत्तः पतितः क्लीबो दुर्भगस्त्यक्तबान्धवः। कन्यादोषौ च यौ पूर्व्वौ एष दोषगणो वरे। त्यक्तबान्धवो बान्धवैस्त्यक्तः। पूर्व्वौ प्रथमपठितौ कन्यादोषौ व्यङ्गत्वदीर्घकुत्सितरोगार्त्तत्वरूपौ।

क्लीबमाह स एव। चतुर्द्दशविधः शास्त्रे षण्डो दृष्टो मनीषिभिः। चिकित्स्यश्चाचिकित्स्यश्च तेषामुक्तो विधिः क्रमात्। निसर्गषण्डो बध्रिश्च पक्षषण्डस्तथैव च। अभिशापाद्गुरो रोगाद्देवक्रोधात्तथैव च। ईर्ष्याषण्ढश्च सेव्यश्च वातरेता मुखेभगः। आक्षिप्तो मोघबीजश्च शालीनोऽन्यापतिस्तथा। बध्रिर्गलिताण्डः।

पञ्चषण्ढः पश्चात्ते भोगक्षमः। ईर्ष्याषण्ढः ईर्षयोत्सन्नपुंस्त्वः। सेव्यः स्त्र्युपचारविशेषेणाविर्भवत्पुंस्त्वः। वातरेता वातोपहतरेतस्कः। मुखेभगः यस्य मुखएव पुंस्त्वशक्तिर्न योनौ। आक्षिप्तः विसर्गसमये यस्य रेतः प्रत्यक् स्रवते। मोघबीजो गर्भाधानासमर्थबीजः। शालीनो यस्य स्त्रीसन्निधानात् त्रपया ध्वजपातः। अन्यापतिर्यस्य भार्य्याव्यतिरिक्तायामेव योषिति पुंस्त्वम्। वशिष्ठः। कुलशीलविहीनस्य पण्डादिपतितस्य च। अपस्मारिविधर्म्मस्य रोगिणां वेशधारिणाम्। दत्तामपि हरेत् कन्यां सगोत्रोढ़ां तथैव च।

अत्र दत्तायाः सगोत्रोढ़ायाश्च हरणोपदेशात् सुतरामन्यस्मै तस्या दानमवगम्यते। तथा च चतुर्दशविधषण्डानभिधायाह नारदः। तत्राद्यावप्रतीकारौ पत्ताख्योमासमाचरेत्। अनुक्रमात् त्रयस्यास्य कालः संवत्सरः स्मृतः। ईर्ष्याषण्डादयो येऽन्ये चत्वारः समुदाहृताः। त्यक्तव्यास्ते पतितवत् क्षतयोन्या अपि स्त्रिया। आक्षिप्तमोघबीजाभ्यां कृतेऽपि पतिकर्म्मणि। पतिरन्यः स्मृतोनार्य्या वत्सरार्द्धं प्रतीक्ष्य तु। शालीनस्यापि दृष्टस्त्रीसंयोगाद्भ्रश्यते ध्वजः। तं हीनविषमन्तु स्त्री वर्षं क्षिप्त्वाऽन्यमाश्रयेत्। अन्यस्यां योमनुष्यः स्यादमनुष्यः स्वयोषिति। लभेत साऽन्यं भर्त्तारमेतत्कार्य्यं प्रजापतेः। अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं बीजिनो नराः। क्षेत्रं बीजवते देयं नाबीजी लब्धुमर्हति। त्रयस्य गुर्वभिशापादिहेतुकषण्डत्रयस्य। पतितवदित्यनेन पतितस्यापि त्यागं दर्शयति।

अथ ब्राह्मादिभेदाः॥ तत्र मनुः। चतुर्णामपि वर्णानां प्रेत्य चेह हिताहितान्। अष्टाविमान् समासेन स्त्रीविवाहा-

न्निबोधत । ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः । गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः । चतुर्णामपि वर्णानां न केवलं द्विजातीनामेवेत्यर्थः । तेषां लक्षणान्याह स एव । आच्छाद्य चार्च्चयित्वा च श्रुतशीलवते स्वयम् । आहूय दानं कन्याया ब्राह्मो धर्म्मः प्रकीर्त्तितः । यज्ञे तु वितते सम्यक् ऋत्विजे कर्म्म कुर्व्वते । अलङ्कृत्य सुतादानं दैवं धर्म्मं प्रचक्षते । एकं गोमिथुनं द्वे वा वरादादाय धर्म्मतः । कन्याप्रदानं विधिवदार्षोधर्म्मः स उच्यते । सहोभौ चरतं धर्म्ममिति वाचाऽनुभाष्य च । कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः । ज्ञातिभ्योद्रविणं दत्त्वा कन्यायै चैव शक्तितः । कन्याऽऽप्रदानं स्वाच्छन्द्यादासुरो धर्म्म उच्यते । इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च । गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसम्भवः । हत्वा च्छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात् । प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते । सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति । स पापिष्ठो विवाहानां पैशाचश्चाष्टमोऽधमः ।

श्रुतशीलवन्तमाहूय तस्मै दानमित्यर्थः । प्रधानशक्त्यभिधाने गुणशक्तिरभिहितवत् प्रकाशते इति न्यायात् श्रुतशीलवते इत्यत्र चतुर्थी । नारदः । सत्कृत्याहूय कन्यान्तु दद्याद्ब्राह्मे त्वलङ्कृताम् । याज्ञवल्क्यः । ब्राह्मोविवाह आहूय दीयते शक्त्यलङ्कृता । धर्म्मत इत्यनेन धर्म्मार्थमेव गोमिथुनादानं न स्वार्थमित्युक्तम् । तथाच मनुः । आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत् । अल्पो वा बहु वाऽपि स्याद्विक्रयस्तावदेव सः । आर्षे यद्गोमिथुनं तच्छुल्करूपं पित्रादिभिर्ग्राह्यमिति केचिद्वदन्ति । मनोस्तु नैतन्मतं, यतः पित्रादिभिस्तद्ग्रहणे स विक्रय एव भवति न प्रदानम् । तस्मादार्ष-

धर्म्मसम्पत्त्यर्थं वराद्गोमिथुनं गृहीत्वा तेनैव सह कन्याप्रदानमार्षः। सह गोमिथुनेन चेति देवलवचनात्। नारदः। वस्त्रगोमिथुनाभ्यान्तु विवाहस्त्वार्ष उच्यते। वस्त्रगोमिथुनाभ्यामलङ्कृतां कन्यां दद्यादित्यनुवर्त्तते वाक्यान्तरीयम्। कनया ऽऽप्रदानं कन्याया आप्रदानमानयनम्। इदञ्च द्रविणं ज्ञातिभिर्न ग्राह्यं किन्तु कन्यायै देयम्। यथा मनुः। आददीत न शूद्रोऽपि शुल्कं दुहितरं ददत्। शुल्कं हि गृह्णन् कुरुते च्छन्नं दुहितृविक्रयम्। तथा, नानुशुश्रुम जात्वेतत् पूर्वेष्वपि हि जन्मसु। शुल्कसंज्ञेन मूल्येन च्छन्नं दुहितृविक्रयम्। बौधायनः। शुल्केन ये प्रयच्छन्ति स्वसुतां लोभमोहिताः। आत्मविक्रयिणः पापा महाकिल्बिषकारिणः। पतन्ति नरके घोरे घ्नन्ति चासप्तमं कुलम्। गमनागमने चैव सर्व्वः शुल्कोऽभिधीयते। काश्यपस्येदमिति तत्त्वकृतः। लोभमोहिता इति कुर्व्वन् ज्ञातयः स्वार्थं न गृह्णीयुः किन्तु कन्याऽर्हणार्थमेवेति दर्शयति। गमनागमने पारितोषिकद्रव्यमादाय कन्याप्रदानार्थं कन्यापितृवेश्मनि यातायाते इति तत्त्वकृतः। उद्वाहतत्त्वे। यासां ना ददते शुल्कं ज्ञातयो न स विक्रयः। अर्हणं यत् कुमारीणामानृशंस्यं हि केवलम्। आनृशंस्यमनैष्ठुर्य्यमनुकम्पेति यावत्। कश्यपः। क्रयक्रीता तु या नारी न सा पत्नयभिधीयते। न सा दैवे न सा पित्र्ये दासीं तां कश्यपोऽब्रवीत्।

एवञ्च, शुल्केन कन्यां यो दद्यात् वराय सदृशाय च। किन्नरैः सह गीयेत गान्धर्व्वं लोकमेति चेति हारीतेन कन्याऽर्हणार्थशुल्कग्रहणएव फलमुक्तं,स्वार्थग्रहणे तु कश्यपादिभिर्दोष उक्तं इति न विरोधः। आसुर एव हारीतेन मानुष इति परिभाषितः। शुल्केन मानुष इति। वरकन्ययोरिच्छया परस्परसंयोगोगान्धर्वः।

अयन्तूपभोगपूर्व्वोऽपीति द्योतयितुं मैथुन्यः कामसम्भव इत्युक्तम्। प्रसह्य बलात्। अलङ्कृतामभिजयन् चात्त्र इति हारीतेन राक्षस-एव चात्त्रतया परिभाषितः।

बौधायनः। अष्टौ विवाहाः। श्रुतशीलिने विज्ञाय ब्रह्मचारिणे-ऽर्थिने दीयते स ब्राह्मः। आच्छाद्यालङ्कृत्यैतया सह धर्म्मश्चर्य्यता-मिति प्राजापत्यः। पूर्व्वां लाजाहुतिं हुत्वा गोभ्यां सहार्षः। दक्षिणासु नीयमानास्वन्तर्वेद्यृत्विजे स दैवः। धनेनोपतोष्यासुरः। सकामेन सकामाया मिथः संयोगो गान्धर्व्वः। प्रसह्य हरणा-द्राक्षसः। सुप्तां मत्तां प्रमत्तां वोपयच्छेदिति पैशाचः।

अत्र च, यत्र नानामुनिभिर्नानाविधं लक्षणमुक्तं तत्र यावन्मात्रस्य सर्व्वत्रानुगमस्तावन्मात्रं लक्षणं तस्यैव प्राशस्त्यार्थमन्यद्वर्णनीयम्। यत्र पुनस्तेषां मिथो मतभेदस्तत्र मतभेदेनोभयमपि लक्षणमादर-णीयम्। यथैतदाहूय कन्यादानं ब्राह्मोऽथापि खल्वर्थिने कन्या-दानं ब्राह्म इति। यदि नामाहूय दीयते नासावर्थी, अथार्थी नैवाहूय दीयते। तथाच, कृते तु दीयते गत्वा त्रेतास्वाहूय दीयते। द्वापरे याचमानाय कलौ त्वनुगमान्विते इति स्मृतौ यमाहूय दीयते नासौ याचमानः यश्च याचमानः न तमाहूय दीयते इति प्रतीयते। एवं हि युगधर्म्मभेदः प्रतिपादितो भवति। अतएवाहूय दानं कन्याया इति मनुवचनव्याख्यानावसरे, स्वयं प्रागयाचितः स्वपुरुषप्रेषणैराहूय अन्तिकमानाय्य वरं यद्दानं स ब्राह्म इति मेधातिथिर्व्याचख्यौ। विद्याऽऽचारवन्तमप्रार्थकं वरमानीय तस्मै कन्यादानं ब्राह्म इति कुल्लूकभट्टोऽप्याह।

मनुः। षड़ानुपूर्व्व्या विप्रस्य क्षत्त्रस्य चतुरोऽवरान्। विट्-शूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान्। विप्रस्यानुपूर्व्व्या षट्

ब्राह्मदैवार्षप्राजापत्यासुरगान्धर्व्वान् धर्म्मादनपेतान् विद्यात्। क्षत्रस्यावरान् परतः पठितान् चतुर आसुरगान्धर्वराक्षसपैशाचान् धर्म्यान् विद्यात्। वैश्यशूद्रयोः पुनः राक्षसवर्जितान् तानेव धर्म्यान् जानीयात्। तथा, चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः। राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः। अनेषां धर्म्यत्वे सत्यप्येतेषामेते प्रशस्ता इत्यर्थः। तथा, पञ्चानान्तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह। पैशाचश्चासुरश्चैव न कर्त्तव्यो कदाचन। पैशाचासुरयोः प्रतिषेधादुपरिपठितानां पञ्चानां प्राजापत्यासुरगान्धर्वराक्षसपैशाचानां त्रयः प्राजापत्यासुरगान्धर्व्वाधर्म्याः द्वावासुरपैशाचावधर्म्यौ। तदेवाह पैशाचश्चेत्युत्तराद्धेन।

अत्र च, यं वर्णं प्रति यस्य विवाहस्य विधिर्निषेधश्च तस्य तं प्रति विकल्पः। एवञ्च विहितस्यासम्भवे विहितप्रतिषिद्धः कर्त्तव्यः। एवमन्यत्रापि। पुनर्मनुः। पृथक् पृथग्वा मिश्रौ वा विवाहौ पूर्वचोदितौ। गान्धर्व्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ। यदा किल स्त्रीपुंसयोरिच्छया मिथः संयोगात्परतो विरुद्धान् पित्रादीन् विजित्य वरस्तामुद्वहति, तदा गान्धर्व्वराक्षसौ मिश्रौ भवतः। नारदः। एषान्तु धर्म्याश्चत्वारो ब्राह्मगाद्याः समुदाहृताः। साधारणः स्याद्गान्धर्वस्त्रयोऽधर्म्यास्ततः परे। देवलः। पूर्वं विवाहाश्चत्वारो-धर्म्यास्तोयप्रदानिकाः। अशुल्काब्राह्मणार्हाश्च तारयन्ति कुलद्वयम्। माधवीये स्मृत्यन्तरम्। चत्वारो ब्राह्मणस्याद्याः शस्तागान्धर्व्वराक्षसौ। राज्ञस्तथाऽऽसुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः। शूद्रे च इति च्छेदः। अन्त्यस्तु पैशाचो गर्हितो न कस्यापि प्रशस्त इत्यर्थः। सर्वोपायैरसाध्या स्यात् सुकन्या पुरुषस्य या।

चौर्य्येणापि विवाहेन सा विवाह्या रहः स्थितेति संवर्त्तेन पैशाच-स्याप्यन्ततोऽनुज्ञातत्वात् । तस्यापि विवाहमध्ये परिगणितत्वाच्च । चौर्य्येण पैशाचेन । पैठिनसिः । राक्षसो वैश्यस्य पैशाचः शूद्रस्य । प्रचेताः । पैशाचोऽसंस्कृतप्रसूतानां प्रतिलोमजानाञ्च ।

बौधायनः । तेषां चत्वारः पूर्वे ब्राह्मणस्य तेष्वपि पूर्वः पूर्वः श्रेयान् । उत्तरेषामुत्तरोत्तरः पापीयान् । तत्रापि षष्ठसप्तमौ क्षत्र-धर्म्मानुगतौ तत्प्रत्ययत्वात् क्षत्रस्य । पञ्चमाष्टमौ वैश्यशूद्राणाम् । अय-न्त्रितकलत्रा हि वैश्यशूद्रा भवन्ति कर्षणशुश्रूषाऽधिकृतत्वात् । गान्धर्व-मप्येके प्रशंसन्ति सर्वेषां स्नेहानुगतत्वात् । यथायुक्तो विवाह-स्तथायुक्ता प्रजा भवतीति विज्ञायते । पूर्व्वे प्रथमोपदिष्टा-श्चत्वारो ब्राह्मप्राजापत्यार्षदैवाः । उत्तरेषामासुरादीनां मध्ये उत्तरोत्तरः आसुराद्गान्धर्वः गान्धर्व्वाद्राक्षसः राक्षसाच्च पैशाचः पापीयान् । षष्ठसप्तमौ गान्धर्वराक्षसौ, पञ्चमाष्टमौ आसुरपैशाचौ ।

विवाहविशेषात् प्रजाविशेषमाह मनुः । दश पूर्वान् परान् वंश्यानात्मानं चैकविंशकम् । ब्राह्मीपुत्त्रः सुकृतकृन्मोचयत्येनसः पितॄन् । दशेत्युभयतः सम्बध्यते । ब्राह्मीपुत्त्रः ब्राह्मविवाहे-नोढ़ायां जातः पुत्त्रः । स सुकृतकृदपि भवति । दश परानेनसो-मोचयति दश पुरुषास्तस्मिन् कुले निष्पापाजायन्ते इत्यर्थः । दश पूर्वान् पितॄनिति सम्बन्धनीयं, परेषां पितृत्वानुपपत्तेः । तथा-चाहुः, येन यस्याभिसंबन्धो दूरस्थस्यापि तस्य सः । अर्थतो-ह्यसमर्थानामानन्तर्य्यमकारणम् । तथा, दैवोढ़ाजः सुतश्चैव सप्त सप्त परावरान् । आर्षोढ़ाजः सुतस्त्रींस्त्रीन् षट् षट् कायोढ़जः सुतः । सप्त परान् सप्तावरानित्यर्थः । त्रींस्त्रीनित्यपि पूर्वापर-भेदेन बोध्यम् । एवमुत्तरत्रापि । कः प्रजापतिर्देवता यस्य

विवाहस्य स विवाहः कायः प्राजापत्य इत्यर्थः। तेन विवाहे-नोढ़ा कायोढ़ा तस्यां जातः कायोढ़जः। ङ्यापोः संज्ञाच्छन्दसो-र्बहुलमिति ह्रस्वः। यद्यपि, मङ्गलार्थं स्वस्त्ययनं यज्ञस्तासां प्रजापतेः। प्रयुज्यते विवाहेषु प्रदानं स्वाम्यकारणमिति स्वोक्त-प्रजापतिदैवतोहोमः सर्वविवाहसाधारणत्वान्नैकस्य प्राजापत्य-व्यपदेशनिमित्तं भवितुमर्हति, तथापि सहधर्मचरणस्य प्रजापते-रभिमतत्वादसत्येव देवतासंबन्धे प्रजापतेर्देवतात्वं भक्त्योच्यते। मेधा-तिथिरप्येवम्। पुनर्मनुः। ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः। ब्रह्मवर्चसिनः पुत्रा जायन्ते शिष्टसम्मताः। रूपसत्त्वगुणोपेता-धनवन्तो यशस्विनः। पर्य्याप्तभोगाधर्म्मिष्ठा जीवन्ति च शतं समाः। इतरेषु तु शिष्टेषु नृशंसानृतवादिनः। जायन्ते दुर्विवाहेषु ब्रह्म-धर्म्मद्विषः सुताः। अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा। निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान् विवर्जयेत्। श्रुताध्ययन-विज्ञानसम्पत्तिनिमित्ते पूजाख्याते ब्रह्मवर्चसं, तद्विद्यते येषां ते ब्रह्मवर्चसिनः। इन्नन्तोऽयम्।

देवलः। गान्धर्वादिविवाहेषु विधिर्वैवाहिको मतः। कर्त्त-व्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिकः। अग्निसाक्षिकोऽभि-मतो वैवाहिको विधिः कर्त्तव्यः। त्रिभिर्वर्णैरिति सा प्रशस्ता द्विजातीनामितिवद्व्याख्येयम्। गृह्यासंग्रहे। ब्राह्मस्यार्षस्य दैवस्य प्राजापत्यस्य याज्ञिकैः। पूर्वं होमविधिः प्रोक्तः पश्चात् परिणयः स्मृतः। गान्धर्वासुरपैशाचाविवाहाराक्षसाश्च ये। तेषां परिणयः पूर्वं पश्चाद्धोमो विधीयते। ब्राह्मादिषु चतुर्षु विवाहेषु पूर्वं लाजहोमः पश्चादग्नेः परितो नयनम्। गान्धर्वादिषु तु चतुर्षु पूर्वमग्नेः परितो नयनं पश्चाल्लाजहोमः। इति पतिर्यथेतं परि-

व्रज्य प्रदक्षिणमग्निं परिणयतीति गोभिलसूत्रं ब्राह्मादिविवाह-चतुष्काभिप्रायं प्रत्येतव्यम् ।

मनुः । एतत्तु न परे चक्रुर्नापरे जातु साधवः । यदन्यस्य प्रतिज्ञाय पुनरन्यस्य दीयते । एतत्तु ब्राह्मादिविषयमासुरादिषु अन्यस्य प्रतिज्ञायापि पुनरन्यस्योत्कृष्टगुणस्य दानोपदेशात् । तत्रापि विशेषमाह गौतमः । प्रतिश्रुत्याप्यधर्मसंयुक्तायन दद्यात् । अधर्मोऽत्र दानानर्हताप्रयोजक इति रत्नाकरः ।

नारदः । सकृदंशोनिपतति सकृत् कन्या प्रदीयते । सकृदाह ददानीति त्रीण्येतानि सतां सकृत् । ब्राह्मादिषु विवाहेषु पञ्चस्वेष विधिः स्मृतः । गुणापेक्षं भवेद्दानमासुरादिषु च त्रिषु । दायादाना-मंशविभागः कन्याप्रदानं तुभ्यमिदं ददानीति सम्प्रदानानु-मतिग्रहणञ्चेत्येतत् त्रयं सतां सकृदेव भवति । सकृत्कन्या प्रदीयते इत्येतदुत्तरवचनेन विशेषितम् । एष विधिः सकृद्दानविधिः । आसुरादिषु तु नैतत्, किन्तु गुणापेक्षयाऽसकृदपि दानं भवति । एवञ्च, सकृत् प्रदीयते कन्या हरंस्तां चौरदण्डभाक् । दत्तामपि हरेत् कन्यां श्रेयांश्चेद्वर आव्रजेत् इति याज्ञवल्कीयमप्यासुरा-दिविवाहविषयमेव पर्य्यवस्यति ।

पुनर्नारदः । दत्त्वा न्यायेन यः कन्यां वराय न ददाति ताम् । अदुष्टश्चेद्वरो राज्ञा स दण्ड्यस्तत्र चौरवत् । ददाति प्रतिपादयति । तथा, नादुष्टा दूषयेत् कन्यां नादुष्टं दूषयेद्वरम् । दोषे तु सति नागः स्यादन्योन्यं त्यजतोस्तयोः । तथा, यस्तु दोषवतीं कन्या-मनाख्याय प्रयच्छति । तस्य कुर्य्यान्नृपोदण्डं पूर्वसाहसचोदितम् । मनुः । विधिवत् प्रतिगृह्यापि त्यजेत् कन्यां विगर्हिताम् । व्याधितां विप्रदुष्टां वा च्छद्मना चोपपादिताम् । यस्तु दोष-

वतीं कन्यामनाख्यायोपपादयेत्। तस्य तद्वितथं कुर्य्यात् कन्या-दातुर्दुरात्मनः। त्यागोऽपि सप्तपदीगमनात् पूर्वमिति कुल्लूक-भट्टः। परतो भार्य्यात्वनिष्पत्तेरिति तस्याशयः। तथा, न दत्त्वा कस्यचित् कन्यां पुनर्दद्याद्विचक्षणः। दत्त्वा पुनः प्रयच्छन् हि प्राप्नोति पुरुषानृतम्। प्राग्विवाहान्मृते वरे दत्तायाः पुनर्दाना-शङ्कायामिदमिति मेधातिथिः। कलौ किल दत्तायाः पुनर्दानं नास्तीति पूर्वमावेदितम्। नारदः। कन्यायां दत्तशुल्कायां ज्यायां-श्चेवर आव्रजेत्। धर्म्मार्थकामसंयुक्तो वाक्यं तत्रानृतं भवेत्। धर्म्मार्थकामसंयुक्तोवरइत्यन्वयः। वाक्यं तुभ्यमिमां दास्यामीत्येवं-रूपमनृतं मिथ्या भवेत्, ज्यायसे वरायैव सा देयेत्यर्थः।

कात्यायनः। प्रदाय शुल्कं गच्छेद्यः कन्यायाः स्त्रीधनं तथा। धार्य्या सा वर्षमेकन्तु देयाऽन्यस्मै विधानतः। अथ प्रवृत्ति-रागच्छेत् प्रतीक्षेत समात्रयम्। अत ऊर्द्धं प्रदातव्या कन्याऽन्यस्मै विधानतः। प्रवृत्तिर्वार्त्ता। नारदः। प्रतिगृह्य तु यः कन्यां वरोदेशान्तरं व्रजेत्। त्रीनृतून् समतिक्रम्य कन्याऽन्यं वरयेद्वरम्। कन्या वरयेदित्यभिधानात्, दातॄणामभावे एतद्बोद्धव्यम्। पारि-भाषिकदेशान्तरविषयश्चैतत् तथैवाभिधानात्। कात्यायनः। अनेकेभ्योऽपि दत्तायामनूढायान्तु यत्र वै। वरागमश्च सर्वेषां लभेताद्यवरस्तु ताम्। पश्चाद्वरेण यद्दत्तं तस्याः प्रतिलभेत सः। अथागच्छेत् समूढायां दत्तं पूर्ववरोहरेत्। वरागमो वराणामा-गमः। सर्वेषां वराणामाद्यवर इति संबन्धः। याज्ञवल्क्यः। दत्तां कन्यां हरन् दण्ड्योव्ययं दद्याच्च सोदयम्। मृतायां दत्त-मादद्यात् परिशोध्योभयव्ययम्। शास्त्रीयनिमित्तवशतोदत्ताया-अपि कन्याया हरणप्रतिपादनात् शास्त्रीयनिमित्तमन्तरेण दत्तां

कन्यां हरन् राज्ञा दण्डनीयः वरस्य व्ययञ्च सवृद्धिकं दद्यात् । मृतायां पुनः कन्यायां दत्तधनादुभयव्ययं परिशोध्य यदवशिष्टं तद्वरो गृह्णीयात् । मनुः । अन्याञ्च दर्शयित्वाऽन्या वोढुः कन्या प्रदीयते । उभे ते एकशुल्केन वहेदित्यब्रवीन्मनुः । वहेत् उद्वहेत् । मनुः । अद्भिरेव द्विजाग्र्याणां कन्यादानं प्रशस्यते । इतरेषान्तु वर्णानामितरेतरकाम्यया । उदककरणकमेव कन्यादानं ब्राह्मणानां प्रशस्तं, क्षत्रियादीनां पुनर्दातृग्रहीत्रोर्दानग्रहणेच्छया विनाऽप्युदकं कन्यादानं प्रशस्तं न तु जलकरणकं कन्यादानं तेषां निषिद्धम् । मानाभावात् । उदकस्पर्शिता या क्वचित् नोदकेन न वाचाचेत्यादि सामान्याभिधानस्वरसाच्च । एवमुदकमन्तरेणापि ब्राह्मणानां कन्यादानं सिध्यत्येव । किन्तु तन्न प्रशस्तमिति बोद्धव्यम् ।

अथ विवाहकालः । संवर्त्तः । रोमदर्शनसम्प्राप्ते सोमो भुङ्क्तेऽथ कन्यकाम् । रजोदृष्ट्वा तु गन्धर्व्वः कुचौ दृष्ट्वा तु पावकः । अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी । दशवर्षा भवेत् कन्या अत ऊर्द्ध्वं रजस्वला । माता चैव पिता चैव ज्येष्ठो भ्राता तथैवच । त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् । तस्माद्विवाहयेत् कन्यां यावन्नर्त्तुमती भवेत् । विवाहोऽष्टमवर्षायाः कन्यायास्तु प्रशस्यते । अष्टवर्षा भवेद्गौरीति वचनं यमाङ्गिरसोरपि । मरीचिः । गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत् । कन्यां ददद्ब्रह्मलोकं रौरवन्तु रजस्वलाम् । स्मृतिः । सर्व्वेषामेव दानानामेकजन्मानुगं फलम् । हाटकगृहगौरीणां सप्तजन्मानुगं फलम् । भट्टभाष्ये स्मृतिः । यावन्न लज्जयाऽङ्गानि कन्या पुरुषसन्निधौ । योन्यादीन्यवगूहेत तावद्भवति नग्निका । आचारमाधवीयेऽप्येतत् । किन्तु तत्र नग्निकेत्यत्र कन्यकेति पाठः । संग्रहकारोऽपि । यावच्चेलं न गृह्णाति

यावत् क्रीड़ति पांशुभिः । यावद्दोषं न जानाति तावद्भवति कन्यका ।

माधवीये स्मृतिः । जन्मतो गर्भाधानाद्वा पञ्चमाब्दात् परं शुभम् । कुमारीवरणं दानं मेखलाबन्धनं तथा । ज्योतिर्निबन्धे । षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः । सोमो भुङ्क्ते ततस्तद्वद्गन्धर्व्वश्च तथाऽनलः । यतः प्रथमं वर्षद्वयं सोमो द्वितीयं वर्षद्वयं गन्धर्व्वस्तृतीयं वर्षद्वयमनलोभुङ्क्ते, अतः षड़ब्दमध्ये नोद्वाह्येत्यर्थः । न चैवं सोमादिभोगकालबोधकं रोमदर्शनसम्प्राप्ते इत्यादि संवर्त्तवाक्यं विरुध्यते इति वाच्यम् । द्वयोरप्यर्थवादरूपतया विरोधाभावात् । ज्योतिर्निबन्धे तावत् षड़ब्दमध्ये नोद्वाह्या इत्यस्यार्थवादतया वर्षद्वयं यत इत्येवमादिकमुक्तम् । संवर्त्तेनापि रोमदर्शनसम्प्राप्ते इत्याद्यर्थवादमभिधाय, तस्माद्विवाहयेत् कन्यां यावन्नर्तुमती भवेदित्युपसंहृतम् । उभयत्रैव विधेयत्वेनाभिमतोऽर्थस्तदनुगुणार्थवादोपन्यासेन समर्थ्यते इति न किञ्चिदनुचितम् ।

गृह्यासंग्रहः । अप्राप्ता रजसो गौरी प्राप्ते रजसि रोहिणी । अव्यञ्जिता भवेत् कन्या कुचहीना च नग्निका । व्यञ्जनैस्तु समुत्पन्नैः सोमो भुञ्जीत कन्यकाम् । पयोधरैस्तु गन्धर्व्वा रजसाऽग्निः प्रकीर्त्तितः । तस्मादव्यञ्जनोपेतामरजामपयोधराम् । अभुक्ताञ्चैव सोमाद्यैः कन्यकान्तु प्रशस्यते । रजस इति शैषिकी षष्ठी । भुञ्जीत भुङ्क्ते । अरजामरजस्काम् । ईदृशीं कन्यकामभिप्रेत्य प्रशस्यते प्रशंसा क्रियते । नग्निका तु श्रेष्ठेति सूचयता गोभिलेनेति वाक्यशेषः । सकर्म्मकादपि भावे लट् । अत्र च विवाहकर्त्ता तावत् धृताधोवसनाया गौर्य्याः प्राप्तौ यतनीयम् । तत्रैव तस्याभ्युदयविशेषोपदेशात् । रोहिणीकन्ययोस्तु

ततोऽपकर्षः । पश्चाद्दषड़ब्दोत्तरकन्यावापद्विषयौ । सप्तसंवत्सरादूर्द्धं विवाहः सार्ववर्णिकः । कन्यायाः शस्यते राजन्नन्यथा धर्म्मगर्हितइति महाभारतवचनात् । दातुस्तु निर्वसनाया दानं प्रशस्तमित्यूहनीयम् ।

पैठीनसिः । यावन्नोद्भिद्येते स्तनौ तावदेव देया अथर्त्तुमती भवति दाता प्रतिग्रहीता च नरकमाप्नोति पितृपितामहप्रपितामहाश्च विष्ठायां जायन्ते तस्मान्नग्निका दातव्या । नग्निका अनागतार्त्तवा । माधवीये वशिष्ठः । प्रयच्छेन्नग्निकां कन्यां ऋतुकालभयात् पिता । ऋतुमत्यां हि तिष्टन्त्यां दोषः पितरमृच्छति । अङ्गिराः । प्राप्ते तु द्वादशे वर्षे यदा कन्या न दीयते । तदा तस्यास्तु कन्यायाः पिता पिबति शोणितम् । यमः । कन्या द्वादश वर्षाणि याऽप्रदत्ता गृहे वसेत् । भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत् स्वयम् । तथा, प्राप्ते द्वादशमे वर्षे यः कन्यां न प्रयच्छति । मासि मासि रजस्तस्याः पिता पिबति शोणितम् । माता चैव पिता चैव ज्येष्ठो भ्राता तथैवच । त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् । यस्तां विवाहयेत् कन्यां ब्राह्मणो मदमोहितः । असम्भाष्योह्यपाङ्क्तेयः स विप्रोवृषलीपतिः । बन्ध्या तु वृषली ज्ञेया वृषली तु मृतप्रजा । शूद्री तु वृषली ज्ञेया कुमारी तु रजस्वला । प्रायेणैतावता कालेनर्त्तुमती भवतीति द्वादशवर्षोपादानं, सर्वथा त्वनागतार्त्तवा दातव्येत्यत्र तात्पर्य्यम् । अतएवात्रिकाश्यपौ । पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता । भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता । यस्तु तां वरयेत् कन्यां ब्राह्मणोऽज्ञानदुर्बलः । अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम् । द्वादशवर्षग्रहणं न कुर्वाते । अतएव पूर्वलिखितवचनेष्वपि नग्निकाया-

दानमुपदिष्टम्। तथा महाभारते। त्रिंशद्वर्षः षोड़शवर्षां भार्य्यां विन्देत नग्निकाम्। अतोऽप्रवृत्ते रजसि कन्यां दद्यात् पिता सकृत्। महदेनः स्पृशेदेनमन्यथैष विधिः सताम्। अन्यथा प्रवृत्ते रजसि।

यत्तु मनुवचनं,त्रिंशद्वर्षोवहेत् कन्यां हृद्यां द्वादशवार्षिकीम्। त्र्यष्टवर्षोऽष्टवर्षां वा धर्म्मे सीदति सत्वरइति। इयता कालेन यवीयसी कन्या वोढ़व्या न पुनरेतावद्वयस एव विवाह इति तस्यार्थः। तथाच शिष्टसमाचारो न विरोत्स्यते। मृतभार्य्यस्य च पुनर्दारकरणे नैष वयोनियमः सम्भवति इति पुनर्दारकरणोपदेशोऽन्यथा न स्यात्। विवाहप्रकरणमतिक्राम्याभिधानाच्चैतदेवं प्रतिपत्तव्यम्। मेधातिथिरप्येवम्। पूर्व्वोक्तमहाभारतवचनस्वरसादप्येषैव व्याख्या समादर्त्तव्या भवति। मन्वर्थमुक्तावल्यामप्युक्तं, एतच्च योग्यकालप्रदर्शनपरं न तु नियमार्थं प्रायेणैतावता कालेन गृहीतवेदो भवति त्रिभागवयस्का च कन्या वोढुर्यूनोयोग्येति गृहीतवेदश्चोपकुर्व्वाणको गृहस्थाश्रमं प्रति न विलम्बेतेति सत्वरइत्यस्यार्थ इत्यन्तेन। विष्णुपुराणम्। वर्षैणैकगुणां भार्य्यामुद्वहेत् त्रिगुणः पुमान्। एतदपि प्राशस्त्यार्थम्। कन्याया-यवीयस्त्वमात्रेणैव विवाहे तात्पर्य्यम्। विवाहतत्त्वार्णवेऽप्येषैव व्यवस्था। अतएव, यवीयसीमित्यवरवयस्कामिति च तत्र तत्रोक्तम्। अतएव, मनुना त्रिंशद्वर्षस्य द्वादशवर्षाया महाभारतेन च षोड़शवर्षाया विवाहोऽभिहित इति धेयम्।

ऋतुमत्या अपि विवाहोभवत्येव, किन्त्वसौ जघन्यः। तथाच गृह्यासंग्रहः। नग्निकान्तु वदेत् कन्यां यावन्नर्त्तुमती भवेत्। ऋतुमती त्वनग्निका तां प्रयच्छेत्त्वनग्निकाम्। तुकारः पश्चा-

न्तरे। नग्निका तु श्रेष्ठेति सूत्रयता गोभिलेन नग्निकायाः श्रेष्ठत्वमुक्तं, तत्पुनस्तु अनग्निकां प्रयच्छेदिति पक्षान्तरमाह। श्रेष्ठपक्षादन्योऽयं पक्षोजघन्य इत्यर्थः। एवञ्चर्तुमत्याविवाहनिन्दा-वचनानि नग्निकाया विवाहप्राशस्त्यतात्पर्य्यकानि। मीमांसा-भाष्यकारैरप्युक्तं, न निन्दा निन्द्यं निन्दितुं प्रवर्त्तते अपितु इतरत् स्तौति इति। अन्यदुपरिष्टाद्वक्ष्यामः। तथा नारदः। कन्या नर्त्तुमुपेक्षेत बान्धवेभ्योनिवेदयेत्। ते चेन्न दद्युस्तां भर्त्रे ते स्युर्भ्रूणहभिः समाः। यावन्तश्चर्त्तवस्तस्याः समतीयुः पतिं विना। तावत्योभ्रूणहत्याः स्युस्तस्य योन ददाति ताम्। अतः प्रवृत्ते रजसि कन्यां दद्यात् पिता सकृत्। महदेनः स्पृशेदेनमन्य-थैष विधिः सताम्। ऋतोः परमपि दानं दर्शयति। भ्रूण-हत्यावचनं निन्दार्थम्। मनुः। त्रीणि वर्षाण्युदीक्षेत कुमार्य्यृतुमती सती। ऊर्द्धन्तु कालादेतस्मात् विन्देत सदृशं पतिम्। उदीक्षेत प्रदातारमपेक्षेत। बौधायनः। त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम्। ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम्। अविद्य-माने सदृशे गुणहीनमपि श्रयेत्। यत्तु विष्णुनोक्तं, ऋतुत्रय-मुपास्यैव कन्या कुर्य्यात् स्वयं वरमिति। तद्गुणवद्वरलाभे सति द्रष्टव्यमिति माधवाचार्य्याः।

मनुः। अदीयमाना भर्त्तारमधिगच्छेद्यदि स्वयम्। नैनः किञ्चिदवाप्नोति न च यं साऽधिगच्छति। यमधिगच्छति सोऽपि न पापमाप्नोतीत्यर्थः। यमः। एवञ्चोपनतां पत्नीं नावमन्येत् कदाचन। न तु तां बन्धकीं विद्यान्मनुः स्वायम्भुवोऽब्रवीत्। आश्वलायनः। कन्यामृतुमतीं शुद्धां कृत्वा निष्कृतिमात्मनः। शुद्धिञ्च कारयित्वा तामुद्वहेद्दानृशंस्यधीः। पिता ऋतून् स्वपुत्र्यास्तु गणयेदार्दितः

सुधीः। दानावधि गृहे यत्नात् पालयेच्च रजोवतीम्। दद्यादृतु-संख्या गाः शक्तः कन्यापिता यदि। दातव्यैकाऽपि निस्वेन दाने तस्या यथाविधि। दद्याद्वा ब्राह्मणेभ्यन्नमतिनिस्वः सदक्षिणम्। तस्यातीतर्त्तुसंख्येषु वराय प्रतिपादयेत्। उपोष्य त्रिदिनं कन्या रात्रौ पीत्वा गवां पयः। अदृष्टरजसे दद्यात् कन्यायै रत्न-भूषणम्। तामुद्वहन् वरश्चापि. कुष्माण्डैर्जुहुयाद्घृतम्। शुद्धां निर्दोषामव्यभिचारिणीमिति यावत्। दाने दाननिमित्तम्। तस्यातीतेति विसर्गलोपे सन्धिरार्षः। अतीतर्त्तुसंख्येष्विति ब्राह्मणेष्वित्यनेनान्वेति। कन्याया यावन्त ऋतवोऽतीतास्तावत्संख्येषु ब्राह्मणेषु सदक्षिणमन्नं दत्त्वा तां वराय प्रतिपादयेदित्यर्थः। कन्यायाः शुद्धिप्रकारमाह उपोष्येत्यादिना। कुष्माण्डैः कुष्माण्ड-मन्त्रैः। ते च मन्त्राः यद्देवा देवहेलनमित्यादयस्तैत्तिरीया-रण्यके पठिताः। एवञ्चर्त्तुमतीविवाहनिन्दावचनान्यकृतप्रतीकार-विषयाणि पर्य्यवस्यन्ति। मनुः। अलङ्कारं नाददीत पित्र्यं कन्या स्वयंवरा। मातृकं भ्रातृदत्तं वा स्तेना स्याद्यदि तं हरेत्। पित्रे न दद्याच्छुल्कन्तु कन्यामृतुमतीं हरन्। स हि स्वाम्यादतिक्रामेदृतूनां प्रतिरोधनात्।

राजमार्त्तण्डकृत्यचिन्तामण्योः। अयुग्मे दुर्भगा नारी युग्मे च विधवा भवेत्। तस्माद्गर्भान्विते युग्मे विवाहे सा पतिव्रता। मासत्रयादूर्द्ध्वमयुग्मवर्षे युग्मेऽपि मासत्रयमेव यावत्। विवाह-शुद्धिं प्रवदन्ति सर्वे वात्स्यादयो ज्योतिषि जन्ममासात्। तथा, युग्माब्दकेषु युवतेरपि जन्ममासान्मासत्रयं विवहने परमब्दशुद्धिम्। आहुः समस्तमुनयो विषमे च वर्षे मासत्रयादुपरि तत्र च जन्म-मासात्। तथा, चतुर्भिः षड्भिरष्टाभिर्दशद्वादशभिस्तथा। वर्षै-

रुद्वाहिता कन्या प्रतिष्ठां नैव गच्छति। द्वादशे दशमाब्दे च चतुर्थे वा चतुर्दशे। षष्ठेऽष्टमे द्वितीये वा योषिदूढ़ा प्रणश्यति।

देवलहारीतौ। आषाढ़े धनधान्यभोगरहिता नष्टप्रजा श्रावणे वेश्या भाद्रपदे इषे च मरणं रोगान्विता कार्त्तिके। पौषे प्रेतवती वियोगबहुला चैत्रे मदोन्मादिनी अन्येष्वेव विवाहिता सुतवती नारी समृद्धा भवेत्। राजमार्त्तण्डे। वक्रे चैवातिचारे त्रिदशपतिगुरौ दैत्यपूज्ये च लुप्ते गुर्वादित्येऽधिमासे दिवसकररिपौ वाक्पतौ चैत्रपौषे। विध्यां केतूद्गमे वा शरदि सुरगुरौ सिंहसंस्थे मनोज्ञे वर्षादाप्नोति चोढ़ा सुनियतमरणं देवकन्याऽपि भर्त्तुः। माङ्गल्येषु विवाहेषु कन्यासंवरणेषु च। दश मासाः प्रशस्यन्ते चैत्रपौषविवर्जिताः। श्रीपतिरत्नमालायाम्। ऊढ़ा दक्षिणमार्गगे दिनकरे नैव प्रतिष्ठां व्रजेत् कन्येत्याह समस्तशास्त्रनिपुणैरेभ्यो मुनीनां मतम्। साध्वीत्युत्तरमार्गगे सुतधनोपेता विवाहे परे चैत्रं पौषयुतं हरेश्च शयनं त्यक्त्वा जगुः शोभनम्। आपस्तम्बगृह्यम्। सर्व्वे ऋतवोविवाहस्य शैशिरौ मासौ परिहाप्योत्तमं च नैदाघम्। ऋतव इत्यनेन लक्षणया मासाएव विधित्सिताः। शैशिरौ मासाविति मासपर्य्युदासात्। विधिपर्य्युदासयोश्चैकविषयत्वात्। अन्यथा लघुत्वात् शिशिरं परिहाप्येति ब्रूयादिति सुदर्शनाचार्य्याः। शैशिरौ माघफाल्गुनौ। उत्तमं नैदाघमाषाढ़म्। शैशिरौ शिशिरस्य पूर्वोत्तरौ मासौ पौषचैत्राविति निर्णयामृतकृत्। बौधायनगृह्यम्। सर्वे मासा विवाहस्य शुचितपस्तपस्यवर्जमित्येके। चतुर्वर्गचिन्तामणौ दक्षः। माघमासे भवेदूढ़ा कन्या सौभाग्यसंयुता। फाल्गुनोढ़ा भवेत् साध्वी वैशाखे पुत्त्रिणी भवेत्। धर्म्मयुक्ता भवेत् ज्यैष्ठे धनिनी कार्त्तिके भवेत्। देवपूजारता नित्यं मामे स्यात्

सोमदैवते। उक्तवर्जितेष्वन्येषु मासेषु प्राप्नुयाद्यदि। विवाहं कन्यका सा स्यात् सुतशीलार्थवर्जिता। सोमदैवते मार्गशीर्षे। सारावल्याम्। यथा पौषे तथा चैत्रे केचिदिच्छन्ति सूरयः। तथा सिंहगते जीवे विवाहं वादरायणः। तथा, सिंहे च भगदैवत्ये गुरौ पुत्त्रवती भवेत्। अत्यन्तसुभगा साध्वी धनधान्यपतिप्रिया। वशिष्ठः। आपूर्य्यमाणपक्षे तु विवाहो ब्राह्मणस्य तु। इतरेषान्तु वर्णानां कृष्णपक्षे विधीयते। नारदः। माघफाल्गुनवैशाख-ज्यैष्ठमासाः शुभावहाः। मध्यमः कार्त्तिको मार्गशीर्षोवै निन्दिताः परे। न कदाचिद्दशर्क्षेषु भानोरार्द्राप्रवेशनात्। विवाहो देवतानाञ्च प्रतिष्ठा चोपनायनम्। पौषेऽपि मकर-स्थेऽर्के चैत्रे मेषगते रवौ। आषाढ़े मिथुनादित्ये केऽप्याहुः करपीड़नम्। वशिष्ठः। पौषेऽपि कुर्य्यान्मकरस्थितेऽर्के चैत्रे भवेन्मेषगतो यदा स्यात्। प्रशस्तमाषाढ़कृतं विवाहं वदन्ति गर्गा मिथुनस्थितेऽर्के। अत्र मासानां विधिप्रतिषेधौ सापेक्ष-निरपेक्षविषयौ द्रष्टव्यौ। तथा च राजमार्त्तण्डः। उक्तानि प्रतिषिद्धानि पुनः सम्भावितानि च। सापेक्षनिरपेक्षाणि श्रुतिवाक्यानि कोविदैः। शेषचरणे,मीमांस्यानीह कोविदैरिति कृत्यचिन्तामणौ पाठः। एवमन्यत्रापि। त्रैवर्णिकानां गृह्यसूत्रोक्त एव कालः अन्येषान्तु ज्योतिःशास्त्रोक्त इति कमलाकरभट्टाः। निशि चेत् सर्व्वेषु द्वादशस्वपि मासेषूद्वहेदिति कालादर्शः। तत्तद्-गृह्योक्तं तत्तच्छाखिनामन्येषां तु यथासम्भवमनुसरणीयमिति तु युक्तमुत्पश्यामः। भुजबलभीमे। ग्रहशुद्धिमब्दशुद्धिं शुद्धिं मासायनर्त्तु-दिवसानाम्। अर्वाग्दशवर्षेभ्योमुनयः कथयन्ति कन्यकानान्तु।

गर्गः। ज्यैष्ठे मासि तथा मार्गे चौरं परिणयं व्रतम्। ज्यैष्ठ-

पुत्रदुहित्रोश्च यत्नतः परिवर्जयेत् । कृत्तिकास्थं रविं त्यक्त्वा ज्यैष्ठे ज्येष्ठस्य कारयेत् । उत्सवेषु च सर्वेषु दिनानि दश वर्जयेत् । ज्योतिस्तत्त्वे । जन्ममासि न च जन्मभे तथा नैव जन्मदिवसेऽपि कारयेत् । आद्यगर्भभवपुत्रकन्ययोर्ज्यैष्ठमासि न च जातु मङ्गलम् । पूर्वार्द्धं साधारणम् । रत्नकोषे । जन्मर्क्षे जन्मदिवसे जन्ममासे शुभं त्यजेत् । ज्यैष्ठे मास्याद्यगर्भस्य शुभं वर्ज्यं स्त्रिया अपि । स्त्रियास्तु जन्ममासे विवाह उक्तः श्रीपतिव्यवहारसमुच्चये । स्नानं दानं तपो-होमः सर्व्वमङ्गल्यवर्द्धनम् । उद्वाहश्च कुमारीणां जन्ममासे प्रशस्यते। आद्यगर्भभवपुत्रकन्ययोरिति विशिष्टं न पृथक् । तेन ज्येष्ठपुत्रस्य ज्येष्ठपुत्र्या सह विवाहो ज्यैष्ठमासे निषिद्धः । यदा पुनः पुत्रो-ज्येष्ठः पुत्री च न तथा विपर्य्ययो वा तदा ज्यैष्ठमासेऽपि विवाहो-भवत्येव । तथा च पराशरः । अज्येष्ठा कन्यका यत्र ज्येष्ठपुत्रो वरो-यदि । व्यत्ययो वा तयोस्तत्र ज्यैष्ठमासः शुभप्रदः । मिहिरः । ज्येष्ठस्य ज्येष्ठकन्याया विवाहो न प्रशस्यते । तयोरन्यतरे ज्येष्ठे ज्यैष्ठमासः प्रशस्यते । द्वौ ज्येष्ठौ मध्यमौ प्रोक्तावेकं ज्येष्ठं शुभावहम् । ज्येष्ठत्रयं न कुर्वीत विवाहे सर्वसम्मतम् । ज्योति-र्निबन्धसर्वस्वे । ज्यैष्ठे न ज्येष्ठयोः कार्य्यं नृनार्य्योः पाणिपीड़नम् । तयोरेकतरे ज्येष्ठे ज्यैष्ठमासेऽपि कारयेत् ।

गृह्यपरिशिष्टम् । धर्म्येष्वेव विवाहेषु कालदोषपरीक्षणं नाध-र्म्येषु । विवाहानां धर्म्यत्वञ्च, पञ्चानान्तु तयोधर्म्यावित्यादि-नोक्तम् । रत्नमालायाम् । प्राजापत्यब्राह्मदैवार्षसंज्ञाः कालेपूक्तेष्वेव कार्य्या विवाहाः । पैशाचाख्यो राक्षसश्चासुरश्च गान्धर्वो वा सर्व्वकाले विधेयाः । राजमार्त्तण्डे । राजभये तथा युद्धे पितॄणां प्राणसंशये । अतिप्रौढ़ा च या कन्या नानुकूल्यं प्रतीक्षते । अतिप्रौढ़ा च

या कन्या कुलधर्म्मविरोधिनी।. अविशुद्धाऽपि सा देया चन्द्र-लग्नबलेन तु। लघुहारीतः। दशवर्षव्यतिक्रान्ता या कन्या शुद्धि-वर्जिता। तस्यास्तारेन्दुलग्नानां शुद्धा पाणिग्रहोमतः।

अत्र तारेन्दुलग्नानां शुद्धेरित्येतावन्मात्राभिधानेन समयशुद्धे-रनपेक्षणीयत्वप्रतीतेः नानुकूल्यं प्रतीक्षते इति अविशुद्धाऽपीति शुद्धिवर्जिता इति च सामान्यतोऽभिधानात् चन्द्रलग्नबलेन त्विति तुकारस्यावधारणार्थत्वेन तावन्मात्रावधारणाच्च राजग्रस्तादौ समया-शुद्धावपि देयेति प्रतीयते। न च, ग्रहशुद्धिमब्दशुद्धिं शुद्धिं मासायन-र्तुदिवसानाम्। अर्वाग्दशवर्षेभ्योमुनयः कथयन्ति कन्यका-नाम्विति भुजबलभीमवाक्ये दशवर्षाभ्यन्तरे शुद्धौ ग्रहाब्दादीनां विशेषोपादानात्तदूर्द्धं तावन्मात्रानियम इति तत्त्वकारोक्तं युक्तमिति वाच्यम्। तावन्मात्रपरत्वे प्रमाणाभावात्। किञ्च, दिवसशुद्धेरपि तत्रोपादानात् दशवर्षादूर्द्धं दिवसशुद्धेरप्यनियमोऽकामेनापि वाच्यः, दिवसशुद्धिश्च मलिम्लुचगुरुशुक्रबाल्यवार्द्धकास्तमयादिनिषिद्धसमया-न्यसमयत्वमिति प्राचीनतरैर्न्यायरत्नादिभिर्वर्णितत्वात् शोभन-चन्द्रादिमत्त्वरिक्तादिदोषरहितत्ववन्मलिम्लुचादिदोषरहितत्वमप्यह्नः पुण्यत्वमिति मलिम्लुचतत्त्वे स्वयञ्चोक्तत्वात् दशाब्दोत्तरमब्दादि-शुद्धिवत् समयशुद्धेरप्यनियमस्तत्त्वकृतां बलादायततिं।

यदप्युक्तं, समयाशुद्धेः स्त्रीपुंसाधारणत्वेन प्रतिप्रसवोन तां स्पृश-तीति। तदपि चिन्त्यम्। प्रतिप्रसवशास्त्रस्य प्रमत्तगीततापत्तेः। उदगयने आपूर्य्यमाणपक्षे कल्याणे नक्षत्रे चौड़कर्म्मोपनयनगोदान-विवाहाः, सार्व्वकालमेके विवाहमित्याश्वलायनादिवाक्यैरयनादि-शुद्धेरपि स्त्रीपुंसाधारणत्वेन तस्या अपि प्रतिप्रसवास्पर्शापत्तेश्च। किञ्च, नष्टप्रजत्वादेर्वैधव्यादेश्च स्त्रीगोचरतया श्रुतस्यापि फलस्य पुरुष-

भागितया स्त्रीपुंसाधारणत्वेन मासाद्यशुद्धेर्गोचराद्यशुद्धेश्चैवं प्रतिप्रसवो-न स्यात्। वैधव्यदाताऽष्टमराशिसंस्थ इत्येवमादेर्गोचराशुद्धिफल-स्यापि तथात्वात्। तत्र फलस्योभयभागित्वेऽपि नष्टप्रजा श्रावणे इत्यादौ स्त्रीगोचरतया कीर्त्तनात् प्रतिप्रसव इति चेत्। अतीचारं गते जीवे वक्रे चैव बृहस्पतौ। कामिनी विधवा प्रोक्ता तस्मात्तौ परि-वर्जयेत्। तथा, बाले च दुर्भगा नारी वृद्धे नष्टप्रजा भवेत्। नष्टे च मृत्युमाप्नोति सर्व्वमेतद्गुरावपि। तथा, सिंहे गुरौ परिणीता पति-मात्मानमात्मजान् हन्ति। क्रमशस्त्रिषु पित्रादिषु वशिष्ठगर्गादयः प्राहुरित्येवमादौ बहुत्र समयाशुद्धिफलस्यापि स्त्रीगोचरतया कीर्त्तना-त्तत्रापि तथैवेति। संस्कारगणेषु स्त्रीणां विवाहमात्रं मन्त्रवदिति विवाहस्य विशेषतः स्त्रीसंस्कारत्वात् स्त्रीविवाहान्निबोधतेत्येवमादौ तत्र तत्र स्त्रीग्रहणं कृतम्। अनेनैवाभिप्रायेण प्रतिप्रसववाक्ये-ष्वपि स्त्रियाः परिकीर्त्तनम्। विवाहस्योभयसम्पाद्यत्वात् स्त्रियाः प्रतिप्रसवोपदेशेन पुंसामपि प्रतिप्रसवमुपदिष्टं मुनयोमन्यन्ते। तस्मात् प्रतिप्रसवोपदेशस्यार्थवत्त्वार्थं पुंसां विवाहकरणमप्यर्था-दाक्षिप्यते। तद्विना तदनुपपत्तेः।

यच्चापरमुक्तं, कृत्यचिन्तामण्यादिषु गोचराद्यशुद्धिप्रतिप्रसव-समयाशुद्ध्योः प्रकरणभेदेनोपादानान्न समयाशुद्धेः प्रतिप्रसव इति। तच्चिन्त्यम्। समयाशुद्धेः कर्म्मान्तरसाधारणेन विवाहमात्रगोचरत्वा-भावादेव प्रकरणभेदोपपत्तेः। विवाहप्रकरणे पूर्व्वलिखितवाक्येभ्य-स्तत्र तत्प्रतिप्रसवोपादानाच्च। अन्यथा प्रारब्धकर्म्मादावपि तत्-प्रतिप्रसवो न स्यात्। तत्रापि प्रकरणभेदस्याविशेषात्। कृत्यचिन्ता-मण्यादिषु प्रकरणभेदस्याकिञ्चित्करत्वाच्च। एतेन मलमासादा-वतिप्रौढ़ाविवाहे प्रतिप्रसवः केनापि विशिष्य नोक्त इत्यपि चिन्त्यम्।

किञ्च, मा नाम विशिष्य प्रतिप्रसवो वोचि सामान्येन त्ववोचीति विशिष्यपदं कुर्वता स्वयमेव भङ्ग्यन्तरेणाङ्गीकृतम् । मलमासेऽपि प्रतिप्रसवश्चिरन्तनैरुक्त इत्यप्युपरिष्टात् प्रदर्शयिष्यामः ।

यच्च, मलमासादिदोषाणां विवाहाद्ये प्रयत्नतः । पुंसः प्रति सदा दोषात् सर्व्वदैव हि वर्जयेतेति क्वचित् ज्योतिस्तत्त्वे दृश्यते । तन्न तत्त्वकारलिखितम् । यतस्तथाविधवचनसद्भावे ततएवाभिमतसिद्धौ उद्वाहतत्त्वे तस्याः स्त्रीपुंसाधारणत्वेन प्रतिप्रसवास्पर्शात् कृत्यचिन्तामण्यादिषु गोचराद्यशुद्धिप्रतिप्रसवसमयाशुद्ध्योः प्रकरणभेदेनोपादानाच्चेत्यादिना तत्त्वकृतां प्रयासानुपपत्तेः । तथाच लौकिकानामाभाणकः । अर्के चेन्मधु विन्देत किमर्थं पर्व्वतं व्रजेत् । इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत् । तस्य केनाप्यलिखितत्वाच्च । किन्तूद्वाहतत्त्वीयं लेखं दृष्ट्वा केनचित्तत् कल्पयित्वोपरि लिखितं लेखकप्रमादान्मूले सन्निविष्टमिति न किञ्चिदनुचितम् । विवाहएव प्रतिप्रसवस्य विचार्य्यमाणत्वेन विवाहाद्ये इत्याद्यपदोपादानस्यानतिप्रयोजनत्वादुक्तरीत्या पुंसः प्रति सदा दोषानुपपत्तेश्च । उपपत्तौ वाऽब्दाद्यशुद्धेरपि तथात्वापत्त्या प्रतिप्रसववाक्यानां प्रमत्तगीतत्वापत्तेरित्युक्तमादावेव । तस्य समूलत्वेऽपि वक्ष्यमाणवचनादत्यन्तापदि मलमासादावपि कर्त्तव्यतैवेति ।

व्यक्तमाहाङ्गिराः । आवृत्ते तीर्थगमने प्रतिष्ठाते च कर्म्मणि । कालात्यये च कन्यायाः कालदोषो न विद्यते । अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी । दशमे कन्यका प्रोक्ता अत ऊर्द्ध्वं रजस्वला । तस्मात् संवत्सरे प्राप्ते दशमे कन्यका बुधैः । प्रदातव्या प्रयत्नेन न दोषः कालदोषजः । यदप्युक्तमङ्गिरोवचने कालदोषोऽब्दाद्यशुद्धिरूप इति । तदपि चिन्त्यम् । एकाकिनी

प्रतिज्ञा हि प्रतिज्ञातं न साधयेदिति न्यायात् । न च दशाब्दमध्ये शुद्धौ ग्रहाब्दादीनां विशेषोपादानात्तदूर्द्धं तावन्मात्रानियमादङ्गिरोवचनस्यापि तत्परत्वमिति वाच्यम् । भीमपराक्रमीयवाक्यस्य तत्परत्वेऽप्यङ्गिरोवचनस्य तथात्वे मानाभावात् । सष्टस्य तु त्रिधेर्नान्यैरुपसंहारसम्भव इति न्यायात् । कालदोषपदस्य समयाशुद्धौ प्रसिद्धेश्च । अतएव, मकरस्थेऽपि तत्कार्य्यं न दोषः कालदोषज इति, अनादिदेवताचार्चासु कालदोषो न विद्यते इति चैवमादौ तत्र तत्राङ्गिरोवचनवदेवोक्तम् । तस्मात् संवत्सरे प्राप्ते दशमे कन्यका बुधैः । प्रदातव्या प्रयत्नेन न दोषः कालदोषज इत्यत्रोक्तविवक्षयाऽपि न गतिः । अस्मन्मते तु पूर्ववचनं दशाब्दोत्तरं परवचनन्तु दशमाब्दे प्रतिप्रसवपरमिति नासङ्गतिः । किञ्चाहृततीर्थगमनादौ वचनान्तरैकवाक्यतया कालदोषपदस्य समयाशुद्धिपरत्वस्यावश्यवक्तव्यत्वात् कन्यायाः कालात्ययेऽपि तथैव वर्णयितुमुचितं, तात्पर्य्यभेदकल्पनस्यान्याय्यत्वात् । अतएव, तिथ्यृक्षयोर्यदा भेदो नक्षत्रस्यान्तएव वा । अर्द्धरात्रेऽथवा कुर्य्यात् पारणं त्वपरेऽह्ननीति वचनव्याख्यानावसरे, नक्षत्रस्यान्त इत्यत्र भोजनार्हकाले एकतरवियोगे अन्यस्यार्द्धरात्रे वियोगे अपरेऽह्ननीत्यस्य सांयोगिकइत्यादिवचनैकवाक्यतया उपवासद्वितीयदिवसपरत्वस्यावश्यवक्तव्यत्वादर्द्धरात्रे उभयवियोगेऽपि तथैव युक्तत्वादिति स्वयमेव वर्णितम् । स्मृत्यर्थसन्देहे स्मृत्यन्तरसंवादादेवार्थनिर्णय इति नयेऽपि प्रागुक्तरीत्या स्मृत्यन्तरसंवादात् कालदोषपदस्य समयाशुद्धिरूपएवार्थो निर्णतव्यो भवति । तत्त्वकृतां मते तु दशाब्दोत्तरं विवाहस्याधर्म्यत्वात्, धर्म्येष्वेव विवाहेषु कालदोषपरीक्षणं नाधर्म्येष्विति गृह्यपरिशिष्टवचनेनापि तत्र कालदोषप्रतीक्षा नास्तीत्यायाति ।

न चैवं दशमाब्दादावधिमासेऽपि विवाहः स्यादिति वाच्यम् । अधिमासे विवाहं यात्रां चूड़ां तथोपनयनादि न कुर्यान्न साव-काशं माङ्गल्यमिति भीमपराक्रमीये सावकाशस्य माङ्गल्यस्य पृथ-गुपादानेन विवाहादेर्निरवकाशस्यापि तत्र निषेधप्रतीतेः । शिष्टानां चिरन्तनाचारोऽपि तथा । वस्तुतस्तु कस्याञ्चिदवस्थायामधिमासे-ऽपि विवाहो भवत्येव । अधिमासकृतान् दोषान् ऋतुपच्चायनो-द्भवान् । मुहूर्त्तकरणोपेतांस्तिथ्युत्पातभवांस्तथा । ग्रहदृष्टिं दुराधर्षां द्रेक्काणांशकराशिजान् । गुरुशुक्रबुधाघ्नन्ति लग्ने सम्यग्व्यवस्थिताः इत्युद्वाहकालनिर्णयप्रकरणे हेमाद्रिधृतवचनात् । आद्यजातकनामानि ये च संस्कारमाश्रिताः । मलिम्लुचेऽपि कर्त्तव्याः काम्या इष्टीर्विवर्जयेदिति माधवाचार्य्यादिधृतस्मृत्या सामान्यतः संस्काराणां प्रतिप्रसवाच्च । एतेन मलमासादौ विवाहे प्रतिप्रसवः केनापि नोक्त इति तत्त्वकारोक्तमनादेयम् । सोऽयं स्वयमदृष्टग्रन्थः परमुपालभमानः स्वात्मानमेवोपालभते इति दामो-दराचार्य्योक्तन्यायापातः ।

संस्कारमाश्रिता अन्नप्राशननिष्क्रमणादय इति माधवा-चार्य्याः । हेमाद्रिणा तु, संस्कारसव्रता इति पठितं, संस्कारा अन्न-प्राशननिष्क्रमणादयः जनार्दनस्य शयनादारभ्य यावदुत्थानं धारण-पारणादिकं करिष्यामीत्येवंसङ्कल्पसहिताः काम्या अपीति व्याख्यातञ्च । अत्रान्नप्राशननिष्क्रमणादय इत्यादिपदोपादानात् विवाहादीनामपि निरवकाशानां मलिम्लुचे कर्त्तव्यतैव निषेधस्तु सावकाशविषय इत्यभिप्रायो माधवाचार्य्याणां हेमाद्रेश्च लक्ष्यते । अन्यथा जातकर्म्मनामकरणनिष्क्रमणान्नप्राशनानामेव मुख्यकाले मलिम्लुचे कर्त्तव्यत्वेऽभिप्रेयमाणे जातकर्म्मनामकरणयोः स्वपदेनैव

निर्देशान्निष्क्रमणान्नप्राशनयोरेवावशिष्टतया अन्नप्राशननिष्क्रमणादय-इत्यादिपदोपादानानुपपत्तेः। तस्वकृतस्तु माधवाचार्य्यव्याख्यानुपन्यस्यापि तत्तात्पर्य्यमपर्य्यालोच्य जातकर्म्मनामकरणान्नप्राशन-निष्क्रमणानामेव मुख्यकाले मलिम्लुचे कर्त्तव्यता अन्येषान्तु न कदाचिदपीत्याहुः। तेषां, ये चेति सामान्यतोऽभिधानाच्च अन्येषामपि मलिम्लुचे कर्त्तव्यता प्रतिपत्तव्या भवति। आश्रमाद्विच्युतश्च य इति सामान्यतोऽभिधानात् अनाश्रमी न तिष्ठेत्तु क्षणमेकमपि द्विजइत्यत्र द्विजपदमुपलक्षणमिति तैरेवोक्तम्।

भीमपराक्रमवाक्येऽपि सामान्यतो विवाहादिकं निषिध्य न सावकाशं माङ्गल्यमित्यनेन स एव निषेधः सावकाशविषयतयोपसंहृतः। अन्यथा तथोपनयनादीत्यादिपदादनुक्तानामप्युपसंग्रहात् सर्वस्यैव सावकाशस्य निरवकाशस्य च निषेधे भेदेनोपादानस्य वैयर्थ्यापत्तेः। आदिपदस्य प्रकारार्थतया पूर्वेण संस्काराणां न सावकाशं माङ्गल्यमित्यनेन च काम्यानां निषेधो वा वर्णनीयः। एवञ्च काम्यानां सर्वथैव वर्जनं संस्काराणान्तु न तथेति द्वयोर्भेदेनोपादानमित्याख्येयम्।

एतेनैतदप्यवसीयते, यन्मलिम्लुचादिसमयाशुद्धीनां निषेधएव न पर्य्युदास इति तत्र विवाहादौ कृते तत्तदनिष्टफले सत्यपि विवाहादि सिध्यत्येव। न च वैधविषयकत्वात् कथं न पर्य्युदासइति वाच्यम्। पर्य्युदासवाक्यस्य विधिशेषरूपत्वादाधुनिकज्योतिर्वाक्यस्य तथात्वासम्भवात् पर्य्युदासानुपपत्तेः। अतएव विकल्पापत्तिरपि नास्ति, तुल्यबलत्वाभावात्। ज्योतिर्व्वाक्यानां ग्रहचारादिवशसंसूचितानिष्टजातज्ञापनपरत्वात्। अतएव तत्र तत्रानिष्टफलमेवोक्तम्। अतएव सर्वैरेव गृह्यकारैरुदगयनादयएव कर्म्म-

कालतयोक्ता न तु मलिम्लुचादयः प्रतिषिद्धाः । तत्राप्यसमास-करणादेकैकस्यानुगुण्यं द्योतितम् । गोभिलेन यथादेशश्चेति सूत्रान्तरमपि ज्ञातम् । अतएव, पूर्वाह्णे नवपत्रिका शुभकरी सर्वार्थसिद्धिप्रदा आरोग्यं धनदा करोति विजयं चण्डी प्रवेशे शुभा । मध्याह्ने जनपीड़नक्षयकरी संग्रामघोरावहा सायाह्ने वधबन्धनानि कलहं सर्पक्षतं सर्वदा इति मध्याह्नादिनिन्दा, रौहिणन्तु न लङ्घयेदितिवद्प्राशस्त्यपरेति तत्त्वज्ञैरप्युक्तम् ।

अतएव, केचिदेवमिच्छन्ति केचिन्नैवमिति तत्र तत्रोक्तं सङ्ग-च्छते । यथा, ग्रहे रवीन्द्वोरवनिप्रकम्पे केतूद्गमोल्कापतनादिदोषे । व्रते दशाहानि वदन्ति तज्ज्ञास्त्रयोदशाहानि वदन्ति केचित् । तथा, जीवोऽर्केण युतः करोति मरणं बालांशुको भागुरिर्नक्षत्रैक-गतो वदन्ति यवनाः पादस्थितो देवलः । प्रायोगर्गपराशरादि-मुनयोनेच्छन्ति चास्तंगते तस्मादस्तमिते सुरेन्द्रसचिवे नेष्टं विवाहादिकम् । एवमकालवृष्टौ बहवः कल्पा उपदिष्टाः । एवमन्यत्राप्यनुसन्धेयम् । देशभेदेन व्यवस्थाभेदोऽपि पर्य्युदासपक्षे नोपपद्यते । न च कर्म्मणः कालपरिभाषायां गृह्यसूत्रेषु अह्नः पुण्यत्वस्याभिधानात् पुण्यत्वस्य च मलिम्लुचादिनिषिद्ध-समयान्यसमयत्वपरतया न्यायरत्नादिभिर्व्याख्यातत्वात् मलि-म्लुचादीनां पर्य्युदासइति वाच्यम् । पूर्वोक्तरीत्या पर्य्युदास-स्यासम्भवेन तस्य प्राशस्त्यपरत्वात् । अन्यथा जातकर्म्मादीनामपि मलिम्लुचादौ करणानुपपत्तेः । विध्यन्तरबलात्तत्र तत्करणमिति चेदेवन्तर्हि विवाहादीनामपि तथैव करणमभ्युपगन्तव्यं भवति । हेतोरविशेषात् ।

किञ्चैवं ज्योतिःशास्त्रनिषिद्धानां तिथ्यादीनामपि पर्य्युदासः

स्यात्। इष्टापत्तौ सकलशिष्टाचारविरोधप्रसङ्गः। किञ्च, कर्म्म कुर्य्यात् फलावाप्तैर चन्द्रादिशोभने बुधः। सुस्थकाले त्विदं सर्वं नार्त्तः कालमपेक्षते। चन्द्रे च शङ्खं लवणं च तारे तिथावभद्रे सिततण्डुलांश्च। धान्यञ्च दद्यात् करणर्क्षवारे योगे तिलान् हेम मणिं च लग्ने। इति देवलवचनेनार्त्तस्य तत्तत्प्रतिकारपूर्व्वकं कर्म्मकरणोपदेशान्नात्र पर्य्युदासः। तथा राजमार्त्तण्डे। उक्तानि प्रतिषिद्धानि पुनः सम्भावितानि च। सापेक्षनिरपेक्षाणि श्रुति-वाक्यानि कोविदैः। मलिम्लुचतत्त्वे। न सकलगुणसम्पत्तिर्भ्यते-ऽल्पैर्दोषैर्बहुतरगुणयुक्तं योजयेन्मङ्गलेषु। प्रभवति न हि दोषो-भूरिभावे गुणानां सलिललववदग्नेः सम्प्रदीप्तेन्धनस्य। बाद-रायणः। कष्टाभीष्टे तुल्यसङ्ख्ये फले चेत् स्यातां नाशः फलयो-स्तत्र वाच्यः। वाच्या पङ्क्तिर्योऽतिरिक्तास्तयोः स्यात् सर्वस्थाने कल्पनैवं प्रदिष्टा।

तदेवं प्रतिकारपूर्वककर्म्मोपदेशात् सापेक्षनिरपेक्षविषयतया व्यवस्थापितत्वात् गुणबाहुल्येनाल्पस्य दोषस्याभ्यनुज्ञानाच्चैवम्भूत-विषये पर्य्युदासो न सम्भवत्येव। एतच्च तत्त्वकृतामप्यनुमतम्। न चैवं विधिप्रतिषेधोपनिपाताद्विकल्पापत्तिरिति वाच्यम्। ज्योतिःशास्त्रस्यानार्षतया तुल्यबलत्वाभावात्। तस्य शुभाशुभप्रज्ञा-पनमात्रपरत्वात्। यदि तु मुनिभिरनुशिष्टएवार्थो ज्योतिर्विद्भिरुप-निबद्ध इत्युच्यते, तदा विकल्पोऽप्युक्तरीत्या व्यवस्थितो मन्तव्यः। अनन्यगतेर्वचनात्। पर्य्युदासस्य चासम्भवात्। अतएव ज्योतिः-शास्त्रोक्तनिषेधानां न पर्य्युदासतेति तत्त्वकृद्भिरप्यभिहितम्। न चैतन्मलमासादिभिन्नविषयमिति वाच्यम्। तावन्मात्रविषयत्वे मानाभावात्। पूर्व्वोक्तवचनेषु मलमासादावपि कर्त्तव्यतोप-

देशाच। सत्यपि वा पर्य्युदासे प्रतिप्रसववचनानामर्थवत्त्वार्थं तत्र तत्र विध्यन्तरकल्पनं विवाहाद्याचरणञ्चाभ्युपगन्तव्यमिति न काचिदसुच्चतिः।

ज्योतिर्निबन्धसर्वस्वे अगस्त्यः। एकोमूढोभवेदन्यः स्वोच्च-मित्रांशगोयदि। स्वराशिमूर्त्तिगश्चैव मूढदोषो विनश्यति। बृहस्पतिः। यद्येकस्यापि मूढत्वं शुभकर्म्म न दोषकृत्। द्वयो-र्मूढत्वमेवोक्तं दोषदं गुरुशुक्रयोः। द्विजन्मादिशुभे कार्य्ये शुक्र-मौढ्यं न दोषदम्। त्रैवर्णिकानामेवोक्तं दोषदं गुरुशुक्रयोः। तथा, अतिपातिषु कार्य्येषु राज्ञां तत्कर्म्मकारिणाम्। विवाहा-दीनि कार्य्याणि मौढ्येऽपि गुरुशुक्रयोः। शान्तिं कृत्वा तयोस्तद्वच्छुक्रदेवेन्द्रमन्त्रिणोः। होमैर्दीपैर्जपैर्वाऽपि तयोरुदित-मन्त्रकैः। तदनेनातिपातिषु तथा राज्ञां तत्कर्म्मकारिणां च गुरुशुक्रयोः शान्तिं कृत्वा तयोर्मौढ्येऽपि विवाहादीनि कार्य्या-णीत्युक्तम्। मत्स्यपुराणे। मौढ्येऽपि च प्रकर्त्तव्या मिश्र-जातिक्रियाः शुभाः। सुरेज्यशुक्रयोर्वाऽपि क्रियाश्चौलादिका-स्तथा। संहितासारे। यदाऽस्तमायाति गुरुर्भृगुर्वा वार्द्धं च बालत्वमकीर्णजातेः। चौलादिकर्म्माणि शुभानि न स्युः सङ्कीर्ण-जातेस्तु शुभावहानि। गुरुभार्गवयोरस्तदोषो जातिचतुष्टये। नैव सङ्करजातीनां शिशुत्वं वार्द्धकं तथा। दीपिकायाम्। त्रिकोण-जायाधनलाभराशौ वक्रातिचारेण गुरुः प्रयातः। यदा तदा प्राह शुभे विलग्ने हिताय पाणिग्रहणं वशिष्ठः। त्रिकोणं नव-पञ्चमं, जाया सप्तमं, धनं द्वितीयं, लाभ एकादशम्। तदनेन गोचरशुद्धौ गुरोर्वक्रातिचारयोरपि विवाहः कर्त्तव्य इत्युक्तम्।

अत्र च विवाहादिकर्म्मणः कालपरिभाषायां गृह्यसूत्रेषु

पुण्याह्नपदोपादानादह्न्येव विवाह इति पाश्चात्याः। यत्तु ज्योतिःसारसंग्रहे, विवाहे तु दिवाभागे कन्या स्यात् पुत्त्रवर्जिता। विवाहानलदग्धा सा नियतं स्वामिघातिनीति। भागपदोपादानात् प्रदोषादौ सन्ध्यायां वा विवाहे दोषाभिधायकं तदिति वदन्ति। रात्रौ दानं न शंसन्ति विना चाभयदक्षिणाम्। विद्यां कन्यां द्विजश्रेष्ठ दीपमन्नं प्रतिश्रयमिति महाभारतवचनाद्रात्रावपीति युक्तमुत्पश्यामः। अभयदक्षिणामभयदानम्। प्रतिश्रयमाश्रयम्। अनेनापि पुण्याहस्य प्राशस्त्यं प्रतीयते। पठन्ति च। मुख्यो विवाहः पूर्व्वाह्णे मध्याह्ने चोत्तमोत्तमः। निशायां मध्यमः प्रोक्तः अपराह्णे तु गर्हितः। गृह्यपरिभाषायां स्मृतिः। यस्मिन्नह्नि विवाहः स्यात् सायमारभ्य तस्य तु। परिचर्य्यां विवाहाग्नेर्विदधीत स्वयं द्विजः। यदि रात्रौ विवाहाग्निरुत्पन्नः स्यात्तथा सति। उत्पन्नस्योत्तरस्याह्नः सायं परिचरेदमुम्। जटमल्लविलासे वृद्धगार्ग्यः। उपसन्ध्यं निशायां वा दिवा वा प्रातरेव तु। विवाहोपायने कुर्य्यात् क्षौरान्नप्राशनं तथा। सीमन्तपुंसवौ वेदव्रतानीति महर्षयः। क्षौरादीनां निशादौ करणमापद्विषयम्, गृह्यकारैर्दिवा तद्विधानादित्यनुसन्धेयम्।

अथ ग्रहशुद्धिः॥ सा च देशाचारानुसारतो विचारणीया। तथाच कृत्यचिन्तामणौ। देशाचारस्तावदादौ विचिन्त्यो देशे देशे या स्थितिः सैव कार्य्या। लोकद्विष्टं पण्डितावर्जयन्ति दैवज्ञोऽतो लोकमार्गेण यायात्। भोजराजः। बृहस्पतौ गोचरशोभनस्थे विवाहमिच्छन्ति हि दाक्षिणात्याः। रवौ शुभस्थे च वदन्ति गौड़ा न गोचरो मालवके प्रमाणम्। तथा, गौड़ेऽमरेज्यार्कशशाङ्कशुद्धौ बुधस्य चैकस्य च कामरूपे। कर्णाटनाटङ्कलिङ्ग-

ईशे जीवस्य पत्युन्नतिदो विवाहः। कृत्यचिन्तामणौ, देशाचारस्ताव-
दादौ विचिन्त्य इति वचनानन्तरमेवैतानि लिखितानि। आश्व-
लायनगृह्यम्। अथ खलूच्चावचा जनपदधर्म्मा ग्रामधर्म्माश्च तान्
विवाहे प्रतीयात्। भोजराजः। यद्यपि सुरगुरुशुद्धिः कथिता व्रत-
बन्धनाद्येषु। सकलगुणोदयशुद्ध्या भानोः शुद्धिः परं गौड़े। विद्या-
धरीविलासे। पुंसामर्कः स्मृतो योनिर्योषितामस्मृतद्युतिः।
अतः पुंयोषितोः शस्तं बलमर्कशशाङ्कजम्। विवाहपटले।
गोचरशुद्धाविन्दुं कन्याया यत्नतः शुभं वीक्ष्य। तिग्मकिरणं
च पुंसां शेषैरबलैरपि विवाहः। गर्गः। अर्कगुर्व्वोर्बलं गौर्य्या-
रोहिण्यर्कबला स्मृता। कन्या चन्द्रबला प्रोक्ता वृषली लग्नतो बला।
वृषली ऋतुमती। बन्ध्या तु वृषली ज्ञेया वृषली तु मृतप्रजा।
अपरा वृषली प्रोक्ता कुमारी या रजस्वला इति देवलवचनात्।

अथ वैवाहिकलग्नविचारः॥ तत्र पूर्व्वोत्तरपद्यावाह वराह-
मिहिरः। उक्तं जन्मनि यत्तदेव भविता यद्वाऽङ्गनानां फलं व्यर्थो-
नन्वयमादरः परिणये तत्काललग्नादिके। अत्रातं प्रथमं प्रधान-
परमं तद्वारजकं योषितामुद्वाहे नियतिर्नयत्यतिबलादेनां समां प्राक्
फलैः। विद्याधरीविलासे तु। लग्नं जन्मनि यद्भवेत् परिणये यच्चापि
तत्कर्म्मणां पूर्व्वेषामिह पर्य्यवस्यति परीणामेन वामभ्रुवाम्।
यद्यप्येतदिहादरस्तदपि न त्याज्यो विवाहोदये यस्माज्जन्म विधात्र-
धीनमपरं पुंसः स्थितं गोचरे। उदये लग्ने। ज्योतिर्निबन्धसर्व्वस्वे।
प्रमदाफलस्य सदसज्जातकविहितस्य यदि न नाशोऽस्ति। तत्
किमनेन बहुना पुनरप्युद्वाहलग्नेन। अथ च विलग्नाधीना
सिद्धिर्नियमेन भवति दम्पत्योः। प्राक्सुकृतसञ्चयफलं तच्च नृणां
चैव वक्तव्यम्। येन च यत् प्रदातव्यं तस्य विधानं सुरेश इन्द्रोऽपि।

यः साचान्नीतिज्ञः सोऽपि न शक्तोऽन्यथा कर्त्तुमिति शौनक-वाक्यान्युपन्यस्य जन्मकालीनलग्नतो यत् फलमवगतं विवाहकालीन-लग्नवशात्तदन्यथाभावे जातकलग्नफलस्याप्रामाण्यप्रसङ्गः तत्-प्रामाण्ये वा विवाहलग्नविचारो व्यर्थ इति पूर्वपक्षमुपदर्श्य, यथा जन्मफलं शुभमपि दशाप्रवेशकालचन्द्रस्य स्थानवशाच्छुभतरमुक्तं, पापदृष्टतत्कालचन्द्रवशाज्जन्मफलं दुष्टमशुभतरमुक्तं, तथा जन्मफल-मशुभमपि विवाहलग्नवशाच्छुभं भवति शुभन्तु जन्मफलं विवाह-लग्ने शुभग्रहसंस्थानवशादतीव शुभमिति परिहृतम्। दृष्टान्तोप-पादनाय वृहज्जातकवाक्यमपि तत्रोदाहृतम्। तद्यथा, पाक-स्वामिनि लग्नगे सुहृदि वा वर्गेऽथ सौम्येऽपि वा प्रारब्धा शुभदा दशा त्रिदशषड्लाभेषु वा पाकपे। मित्रोच्चोपयत्रिकोणमदने पाकेश्वरस्य स्थितश्चन्द्रः सत्फलबोधनानि कुरुते पापाणि चातोऽन्यथा। पाकस्वामिनि दशाऽधिपतौ।

सोऽयं पक्षसममेव दृष्टान्ततयोपन्यस्य परिहारो नास्मभ्यं रोचते। तत्रापि पर्य्यनुयोगस्य तदवस्थत्वात्। शास्त्रमात्रावष्टम्भेन परिहारे च चोद्यस्यैवानवतारात्। तत्र ब्रूमः। अदृष्टजन्मवेदनीयं खल्वनियतविपाकं पूर्वसञ्चितं कर्म्म किञ्चिदभिव्यञ्जकं समानं कर्म्मान्तरं निमित्तमासाद्य विपाकमारभते इति तावत् पातञ्जल-सिद्धान्तः। तत्र तावज्जन्मलग्नवशात्तत्तच्छुभाशुभविपाकस्य कर्म्मणोऽभिव्यञ्जकं समानं किञ्चित् कर्म्मोपपत्स्यते इत्येतदवगतं, विवाहलग्नवशाच्च तद्वैपरीत्यं, द्वयोरपि सूचकत्वेन कस्याप्य-जनकत्वात्। एवञ्च यद्बलवत्तदेव सूचयिष्यति तत्सूचितं च समानं कर्म्म पूर्व्वसञ्चितं कर्म्म विपाकाभिमुखं करिष्यति। दुर्बलन्तु समानं कर्म्म सूचितमपि तूष्णीमासिष्यते विनङ्क्ष्यति आवाप वा गमि-

ष्यति। द्वयोरेव विरुद्धनिमित्तसूचकत्वे तत्तन्निमित्तसद्भावमात्रस्य तावन्मात्रादवगतिः। तयोश्च सूचितयोर्निमित्तयोर्बलाबलभावोपपत्तेस्तयोरपि यद् बलवत् तदेव समानं कर्माभिव्यञ्जयिष्यति। अन्यतरसूचितं तद्विरुद्धनिमित्तन्तु बलवता निमित्तान्तरेण प्रतिरुद्धं न तत्समानकर्मणोऽभिव्यक्तिकारणं भविष्यति। यत्त्वदृष्टजन्मवेदनीयं कर्मानियतविपाकं तन्नश्येदावापं वा गच्छेदभिभूतं वा चिरमप्युपासीत यावत् समानं कर्म्माभिव्यञ्जकं निमित्तमस्य न विपाकाभिमुखं करोतीति तद्विपाकस्यैव देशकालनिमित्तानवधारणादियं कर्मगतिर्दुर्विज्ञाना विचित्रा चेति पातञ्जलसिद्धान्तात्। अतएव पूर्वलिखितबृहज्जातकवाक्ये तत्तदवस्थचन्द्रस्य सत्फलकर्म्मणां पापफलकर्म्मणाश्च बोधकत्वमुक्तमिति सुधीभिर्भाव्यम्।



अथ प्रतिकूलचिन्ता॥ माण्डव्यः। वाग्दानानन्तरं माता पिता भ्राता विपद्यते। विवाहो नैव कर्त्तव्यः स्ववंशहितमिच्छता। वरस्य मात्रादिमरणविषयमिदं, तस्यैव विवाहकर्त्तृत्वात्। वध्वा मात्रादिमरणेऽपि निषेधमाह शौनकः। वरवध्वोः पिता माता पितृव्यश्च सहोदरः। पितृव्यस्त्रीसुतौ भ्राता भगिनी चाविवाहिता। एभिरत्र विपन्नैश्च प्रतिकूलं बुधैः स्मृतम्। अन्यैरपि विपन्नैस्तु केचिदूचुर्न तद्भवेत्। पितृव्यस्त्रीसुतः पितृव्यस्त्री पितृव्यपुत्रश्च। भ्राता वैमात्रेयः, सहोदराणां स्वपदोपात्तत्वात्। अन्यैरेतद्व्यतिरिक्तैः सगोत्रादिभिः। तथाच भृगुः। वाग्दानानन्तरं यत्र कुलयोः कस्यचिन्मृतिः। तदोद्वाहो नैव कार्य्यः स्ववंशक्षयदोषतः। स्मृतिचन्द्रिकायाम्। कृते वाङ्निश्चये पश्चान्मृत्युर्मर्त्यस्य गोत्रिणः। तदा न मङ्गलं कार्य्यं नारीवैधव्यदं ध्रुवम्। मङ्गलं विवाहः।

ज्योतिर्निबन्धे गर्गः। कृते तु निश्चये पश्चान्मृत्युर्भवति कस्यचित्। तदा न मङ्गलं कार्य्यं कृते वैधव्यमाप्नुयात्। मृत्युर्वरकन्ययोर्गृहे इति शेषः। तदाह ज्योतिर्मेधातिथिः। वधूवरार्थं घटिते सुनिश्चिते वरस्य गेहेऽप्यथ कन्यकायाः। मृत्युर्यदि स्यान्मनुजस्य कस्यचित्तदा न कार्य्यं खलु मङ्गलं बुधैः। स एव। पुरुषत्रयपर्य्यन्तं प्रतिकूलं सगोत्रिणाम्। प्रवेशनिर्गमौ तद्वत्तथा मुण्डनमण्डने। प्रेतकर्माण्यनिर्व्वर्त्त्य चरेन्नाभ्युदयक्रियाम्। आचतुर्थं ततः पुंसि पञ्चमे शुभदं भवेत्। अनेन चौलादिकमपि निषिद्धम्। तथा। वाग्दानानन्तरं यत्र कुलयोः कस्यचिन्मृतिः। तदा संवत्सरादूर्द्धं विवाहः शुभदो भवेत्। अन्यत्रापि। पित्रोरब्दमशौचं स्यात्तदर्द्धं मातुरेव च। मासत्रयन्तु भार्य्यायास्तदर्द्धं भ्रातृपुत्त्रयोः। अन्येषान्तु सपिण्डानामशौचं मासमीरितम्। तदन्ते शान्तिकं कृत्वा ततो लग्नं विधीयते। मातृपदं सपत्नीमातृपरं, पित्रोरब्दमित्यभिधानात्। पित्रोरिति राजमार्त्तण्डे पाठः। पितुरिति स्मृतिरत्नावल्याम्। लग्नं विवाहः। ज्योतिःप्रकाशे। प्रतिकूलेऽपि कर्त्तव्यो विवाहो मासतः परः। शान्तिं विधाय गां दत्त्वा वाग्दानादि चरेत् पुनः। शान्तिर्विनायकशान्तिः। मेधातिथिः। प्रतिकूले न कर्त्तव्यो गच्छेत् यावदृतुत्रयम्। प्रतिकूलेऽपि कर्त्तव्यमित्याहुर्बहुविप्लवे। ज्योतिःसागरे। दुर्भिक्षे राष्ट्रभङ्गे च पित्रोर्व्वा प्राणसंशये। प्रौढ़ायामपि कन्यायां नानुकूल्यं प्रतीक्ष्यते। तदनेन दुर्भिक्षादिविप्लवे प्रतिकूलेऽपि कर्त्तव्यमित्युक्तं भवति। तदानीमपि विनायकशान्तिं कृत्वैव कर्त्तव्यम्। सङ्कटे समनुप्राप्ते याज्ञवल्क्येन योगिना। शान्तिकं तु गणेशस्य कृत्वा तां शुभमाचरेदितिमेधातिथिवचनात्। अमीषां पक्षाणां सापेक्षनिरपेक्षतया व्यवस्था।

मातृरजोयोगे निर्णयसिन्धौ गर्गः। यस्योद्वाहादिमाङ्गल्ये माता यदि रजस्वला। तदा न तत् प्रकर्त्तव्यमायुःक्षयकरं यतः। वृद्धमनुः। विवाहव्रतचूड़ासु माता यदि रजस्वला। तदा न मङ्गलं कार्य्यं शुद्धौ कार्य्यं शुभेप्सुभिः। मेधातिथिः। चौले च व्रतबन्धे च विवाहे यज्ञकर्म्मणि। भार्य्या रजस्वला यस्य प्रायस्तस्य न शोभनम्। वधूवरान्यतरयोर्जननी चेद्रजस्वला। तस्याः शुद्धेः परं कार्य्यं माङ्गल्यं मनुरब्रवीत्। माधवीये। प्रारम्भात् प्राग्विवाहस्य माता यदि रजस्वला। निवृत्तिस्तस्य कर्त्तव्या सूतकश्रुतिचोदनात्। प्रारम्भान्नान्दीमुखश्राद्धात्। नान्दीश्राद्धं विवाहादाविति विष्णुना तस्यैव तत्रारम्भतयाऽभिधानात्। नान्दीमुखश्राद्धोत्तरं रजोदोषे तु कपर्द्दिकारिकासु। सूतिकोदक्ययोः शुद्ध्यै गां दद्याद्धोमपूर्व्वकं। प्राप्ते कर्म्मणि शुद्धिः स्यादितरस्मिन्न शुध्यति। अलाभे सुमुहूर्त्तस्य रजोदोषे तु सङ्कटे। श्रियं संपूज्य तत् कुर्य्यात् पाणिग्रहणमङ्गलम्। हैमीं माषमितां पद्मां श्रीसूक्तविधिनाऽर्च्चयेत्। प्रत्यृचं पायसं हुत्वा ह्यभिषेकं समाचरेत्। चतुर्थार्द्धे, श्रियं संपूज्य विधिवत्ततो मङ्गलमाचरेदिति वाक्सारे पाठः। प्रत्यृचं श्रीसूक्तस्य। अभिषेकं रजस्वलायाः। धर्म्माम्भोधौ। उपवासेन शुध्यन्ति नार्य्यः सद्योरजस्वलाः। एकाकिन्यो विवाहादौ देशभङ्गेषु चापदि।

अथ बालवैधव्ययोगे शान्तिः॥ निर्णयसिन्धौ मार्कण्डेयपुराणम्। बालवैधव्ययोगे तु कुम्भद्रुप्रतिमादिभिः। कृत्वा लग्नं ततः पश्चात् कन्योद्वाह्येति चापरे। लग्नं विवाहम्। बालवैधव्ययोगे तां कन्यां नोद्वहेत्। अपरिहार्य्यत्वे तु कुम्भादिभिस्तदुद्वाहं विधाय पश्चादुद्वहेत्। सूर्य्यारुणसंवादे। विवाहात् पूर्व्वकाले च चन्द्रतारा-

बलान्विते। विवाहोक्ते च मन्यन्या कुम्भेन सह चोद्वहेत्। सूत्रेण वेष्टयेत् पश्चाद्दशतन्तून् विधानतः। कुङ्कुमालङ्कृतं देहं तयोरेकान्तमन्दिरे। ततः कुम्भञ्च निःसार्य्य प्रभज्य सलिलाशये। ततोऽभिषेचनं कुर्य्यात् पञ्चपल्लववारिभिः। कुङ्कुमालङ्कृतं कुम्भकन्ययोर्देहं सूत्रेण वेष्टयेदिति संबन्धः। अभिषेचनं कन्यायाः।

कुम्भप्रार्थनाऽपि कर्त्तव्या। तदपि तत्रैवोक्तम्। वरुणाङ्गस्वरूपाय जीवनानां समाश्रय। पतिं जीवय कन्यायाश्चिरं पुत्त्रसुखं कुरु। देहि विष्णो वरं देव कन्यां पालय दुःखतः। ततोऽलङ्कारवस्त्राभ्यां वराय प्रतिपादयेत्। विष्णुमूर्त्तिदानमपि तत्रैवोक्तम्। ब्राह्मणं साधुमामन्त्र्य संपूज्य विविधार्हणैः। तस्मै दद्याद्विधानेन विष्णोर्मूर्त्तिं चतुर्भुजाम्। शुद्धवर्णसुवर्णेन वित्तशक्त्याऽथवा पुनः। निर्मितां रुचिरां शङ्खगदाचक्राब्जसंयुताम्। दधानां वाससी पीते कमलोत्पलमालिनीम्। सदक्षिणां च तां दद्यान्मन्त्रमेनमुदीरयेत्। यन्मया प्राचि जनुषि घ्नत्वा पतिसमागमम्। विषोपविषशस्त्राद्यैर्हतो वाऽतिविरक्तया। प्राप्य मानं महाघोरं यशःसौख्यधनापहम्। वैधव्याद्यतिदुःखौघनाशाय सुखलब्धये। बहुसौभाग्यलब्ध्यै च महाविष्णोरिमां तनुम्। सौवर्णीं निर्मितां शक्त्या तुभ्यं सम्प्रददे द्विज। अनघाऽद्याहमस्मीति त्रिवारं प्रजपेदिति। एवमस्त्विति तत्प्रोक्तिं गृहीत्वा स्वगृहं विशेत्। ततो वैवाहिकं कुर्य्याद्विधिं दाता मृगीदृशः। अत्र च कुम्भप्रार्थना पित्रादिना कर्त्तव्या। पतिं जीवय कन्याया इति मन्त्रलिङ्गात्। प्रतिमादानन्तु कन्ययैव कर्त्तव्यम्। यन्मया प्राचि जनुषीत्यादिमन्त्रलिङ्गात्। कुम्भादि विवाहितायास्तु पुनर्भूत्वं न भवति। स्वर्णाम्बुपिप्पलाभाश्च प्रतिमा विष्णुरूपिणी। तया सह विवाहे तु

पुनर्भूत्वं न जायते । अश्वत्थविवाहादयस्तु विस्तरभयान्न लिख्यन्ते ।

अथ मण्डपादि ॥ तत्र वशिष्ठः । षोड़शारत्निकं कुर्य्याच्चतुर्द्वारोपशोभितम् । मण्डपं तोरणैर्युक्तं तत्र वेदिं प्रकल्पयेत् । अष्टहस्तन्तु रचयेन्मण्डपं वा द्विषट्करम् । नारदः । हस्तोच्छ्रितां चतुर्हस्तैश्चतुरस्रां समन्ततः । स्तम्भैश्चतुर्भिः सुश्लक्ष्णैर्वामभागे तु सद्मनि । समान्तथा चतुर्दिक्षु सोपानैरतिशोभिताम् । प्रागुदक्प्रवणां रम्भास्तम्भहंसशुकादिभिः । एवंविधामारुरुहेन्मिथुनं साग्निवेदिकाम् । हस्तोच्छ्रितां हस्तोन्नताम् । चतुरस्रां चतुष्कोणाम् । सद्मनि मण्डपे । प्रागुदक्प्रवणां पूर्व्वोत्तरनिम्नाम् । मिथुनं स्त्रीपुंसौ ।

गोभिलीयानान्तु, पाणिग्रहणे पुरस्ताच्छालाया अग्निरुपसमाहितो भवतीति स्वगृह्ये शालायाः पुरस्तादग्निस्थापनोपदेशान्मण्डपो न भवति । पारस्करीयाणान्तु, पञ्चसु वहिःशालायां विवाहे चूड़ाकरणे उपनयने केशान्ते सीमन्तोन्नयने इति सूत्रेण वहिःशालायामग्निस्थापनोक्तेर्मण्डपः कार्य्यः । वहिःशालायां वहिर्निर्म्मितशालायाम् । हरिहरभाष्येऽप्येवम् । तत्त्ववन्तस्तु वहिःशालायां प्रधानगृहाङ्गने इत्याहुः ।

सप्तर्षिमते । मङ्गलेषु च सर्व्वेषु मण्डपो गृहमानतः । कार्य्यः षोड़शहस्तो वा न्यूनहस्तोदशावधि । स्तम्भैश्चतुर्भिरेवात्र वेदी मध्ये प्रतिष्ठिता । हस्तो वध्वाः, सोपानं पश्चिमतः उपरि उक्तपरिमाणाद्भिन्नमिति कमलाकरभट्टाः । तच्चिन्त्यम् । चतुर्दिक्षु सोपानैरतिशोभितामिति नारदवचनविरोधात् । न च तत्र चतुर्दिक्षु समामिति संबन्धः, विनिगमनाऽभावेन मध्यमणिन्यायेनोभाभ्यामेव

संबन्धस्य वक्तुमुचितत्वात्। सोपानैरिति बहुवचननिर्देशाच्च। चतुर्वर्गचिन्तामणौ व्यासः। कण्डनदलनयवारकमण्डपमृद्वेदिवर्णकाद्यखिलम्। तत्सम्बन्धिगलागतमृक्षे वैवाह्निके कुर्यात्। यवारकं चिक्सा इति प्रसिद्धमिति निर्णयसिन्धुः। तच्च यवपिष्टादिनिर्मितमङ्गलद्रव्यविशेषो दाक्षिणात्ये प्रसिद्धमालेपनादौ व्यवह्रियते। मृत् मृदाहरणम्। दैवज्ञमनोहरे। चित्रा विशाखा शततारकाऽश्विनी ज्येष्ठाभरण्यौ शिवभाच्चतुष्टयम्। हित्वा प्रशस्तं फलतैलवेदिकाप्रदानकं कण्डनमण्डनादिकम्। शिवभमार्द्रानक्षत्रं तदारभ्य चतुष्टयमित्यर्थः।

अथ मृदाहरणाङ्कुरार्पणे॥ ज्योतिर्निबन्धे नारदः। कर्त्तव्यं मङ्गलेष्वादौ मङ्गलायाङ्कुरार्पणम्। नवमे सप्तमे वाऽपि पञ्चमे दिवसेऽपिवा। [illegible]ये बीजनक्षत्रे शुभवारे शुभोदये। सम्यग्गृहाण्यलङ्कृत्य वितानध्वजतोरणैः। सह वादित्रनृत्याद्यैर्गत्वा प्रागुत्तरां दिशम्। तत्र मृत्तिकतां श्लक्ष्णां गृहीत्वा पुनरागतः। मृन्मयेष्वथवा वैणवेषु पात्रेषु योजयेत्। अनेकबीजसंयुक्तां तोयपुष्पोपशोभिताम्। आदावित्यनेन नवमादीनां सम्बन्धः। बृहस्पतिः। आत्यन्तिकेषु कार्य्येषु कार्य्यं सद्योऽङ्कुरार्पणम्। शौनकः। आधानं गर्भसंस्कारं जातकर्म्म च नाम च। हित्वाऽन्यत्र विधातव्यं मङ्गलेऽङ्कुरवापनम्।

अथ कन्यादानाधिकारिणः॥ तत्र विष्णुः। पिता पितामहो भ्राता सकुल्यो मातामहो माता चेति कन्याप्रदाः पूर्व्वाभावे प्रकृतिस्थः परः परः। ऋतुत्रयमुपास्यैव कन्या कुर्य्यात् स्वयं वरम्। ऋतुत्रये व्यतीते तु प्रभवत्यात्मनः सदा। सकुल्यः समानकुलजातः सपिण्डादिः। तदनेन पितृपितामहभ्रातृसकुल्य-

मातामहमातरः कन्याप्रदाः, तत्रापि पूर्व्वपूर्व्वस्याभावे परपरस्याधिकारः, अधिकारश्च तेषां प्रकृतिस्थानामेव न त्वप्रकृतिस्थानां कामाद्युपसृष्टानाम् । ऋतुत्रयादुपरिष्टात्तु कन्या स्वयमेव कश्चिद्वरं कुर्य्यादिति विष्णुरुपदिशति ।

याज्ञवल्क्यस्त्वेतानेव मातामहव्यतिरिक्तान् प्रकृतिस्थान् पूर्व्वस्य पूर्व्वस्याभावे परान् परांश्च कन्यादानेऽधिकारिणः, दातॄणां पुनरभावे स्वयमेव कन्या गमनार्हं वरं कुर्य्यादित्याह । यथा याज्ञवल्क्यः । पिता पितामहो भ्राता सकुल्यो जननी तथा । कन्याप्रदः पूर्व्वनाशे प्रकृतिस्थः परः परः । अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ । गम्यन्त्वभावे दातॄणां कन्या कुर्य्यात् स्वयं वरम् ।

नारदः पुनरन्यथैव स्मरति। यथा नारदः। पिता दद्यात् स्वयं कन्यां भ्राता वाऽनुमतः पितुः । मातामहो मातुलश्च सकुल्याबान्धवास्तथा । माता त्वभावे सर्व्वेषां प्रकृतौ यदि वर्त्तते । तस्यामप्रकृतिस्थायां दद्युः कन्यां स्वजातयः । अनेन पितृभ्रातृमातामहमातुलसकुल्यबान्धवानामभावे मातुरधिकारस्तस्यास्त्वभावे स्वजातीनामित्याह । सकुल्याः पितृपक्षीयाः बान्धवा मातृपक्षीया इति मदनपारिजातप्रभृतयः । सकुल्यबान्धवस्वजातीनां बहुत्वाद्बहुवचनम् ।

न च, बान्धवः पितामहो विष्णुवचनैकवाक्यत्वादिति रत्नाकराद्युक्तं युक्तमिति वाच्यम् । नारदसंहितायां सकुल्याबान्धवास्तथेति बहुवचनान्तपाठस्यैव दर्शनेन पितामहस्य चैकत्वेनैकवचनान्ततयैकवाक्यत्वासम्भवात् । किञ्च । विष्णुवचने पितृपितामहादीनामुपन्यासक्रमेणाधिकारकथनात् मातुलस्य च तत्रापरिगणितत्वात्

नारदेन परिगणितत्वाच्च वाक्ययोर्भिन्नार्थत्वात् कस्य केनाभि-
सम्बन्धः। एतेन सकुल्यपितामहयोर्नारदोक्तक्रमो न ग्राह्यः, किन्तु
विष्णुयाज्ञवल्क्योक्तक्रमोग्राह्यः, पाठक्रमाच्छाब्दक्रमस्य बलवत्त्वा-
दिति तत्त्वकारोक्तमपि चिन्त्यम्। याज्ञवल्क्येन मातामहा-
दीनामपरिगणितत्वाच्च।

यदप्युक्तं, याज्ञवल्क्यवचने तथेत्यनेन नारदोक्तमातामहाद्याः
समुच्चिता इति। तदपि चिन्त्यम्। याज्ञवल्क्येन परिगणितेषु
पूर्वपूर्वस्याभावे परपरस्याधिकारकथनात् तथेत्यनेन मातामहा-
दीनां समुच्चये जनन्याः परतएव तेषामधिकारापत्त्या विष्ण्वादि-
वचनविरोधापत्तेः। तस्मान्नारदवचनवत् याज्ञवल्क्यवचनेऽपि
तथेत्येतदुक्तमात्रसमुच्चयार्थमेव, न त्वनुक्तसमुच्चयार्थम्। यच्चापर-
मुक्तं, नारदवचनानुसारेण विष्णुवचने मातुः पूर्वं मातुलोऽपि
बोध्य इति। तदपि चिन्त्यम्। पित्रादिमातृपर्य्यन्तानां नियत-
क्रमाणां मध्ये तत्रासंप्रविष्टस्य मातुलस्यानुप्रवेशासम्भवात्
शास्त्रार्थवैरूप्यापत्तेः। तस्माद्भिन्नान्येवैतानि वाक्यानि मतभेदा-
एव चैते मुनीनामित्यादरणीयम्।

तत्र विशेषमाह कात्यायनः। स्वयमेवौरसीं दद्यात् पित्रभावे
स्वबान्धवाः। मातामहस्ततोऽन्यां हि माता वा धर्म्मजां सुताम्।
ततोऽन्यामौरसीव्यतिरिक्ताम्। पित्रभावे मातामहो दद्यात्। माता-
महग्रहणं मातुलस्याप्युपलक्षणम्। अतस्तदभावे मातेति क्रमः।
युक्तञ्चैतत्। क्षेत्रजायां मातामहावयवप्राधान्यात्। एवञ्चौरस्याः
कन्याप्रदाने पितृबन्धुषु विद्यमानेषु मातामहादीनामधिकारो-
नास्तीति विश्वेश्वरभट्टप्रभृतयः। तत्रापि विशेषमाह स एव।
दीर्घप्रवासयुक्तेषु पौगण्डेषु च बन्धुषु। मातुलः समये दद्यां-

दौरसीमपि कन्यकाम्। पौगण्डेषु अप्राप्तव्यवहारेषु। बाल आ षोड़शाद्वर्षात् पौगण्डश्चापि शब्द्यते। परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते इति नारदोक्तेः। समये विवाहकाले।

माता वा धर्मजां सुतामित्यस्यायमर्थः। पित्रभावे माता वा धर्मजां सुतां दद्यात्। धर्मजा औरसी। अपुत्रिकस्य कन्या स्वा धर्मजा पुत्रवद्धरेदिति तेनैव औरस्यां धर्मजाशब्दस्य प्रयुक्तत्वात्। धर्मजां नियोगोत्पन्नामन्यामिति पुनर्मदनपारिजातप्रभृतयः। एवञ्च नारदोक्तः पितुरभावे मातामहमातुलयोरधिकारः क्षेत्रजकन्याविषय इति कात्यायनवचनस्वरसादवगम्यते। अतएव भ्राता वाऽनुमतः पितुरिति तत्रोक्तम्। विष्णूक्तः सकुल्येभ्यः परतो मातामहस्याधिकारस्तु औरसीविषयः पर्यवस्यति। एवञ्चानयोर्विभिन्नविषयतया परस्पराभिसम्बन्धगन्धोऽपि नास्ति। मतभेदपक्षे तु सुतरां तथेति। कन्यां दद्युः स्वजातय इत्यनेन यज्जातीया कन्या तज्जातीयानामेवान्ततोदानाधिकार इत्युक्तम्। पारिजातप्रभृतयोऽप्येवम्।

यत्तु, तस्यामित्यनेन मातुरुपस्थितत्वात् सजातय इत्यनेन मातामहमातुलेतरमातृपक्षसकुल्या उच्यन्ते इति तत्त्वकृद्भिरुक्तम्। तच्चिन्त्यम्। तस्यामित्यनेन मातुरुपस्थितत्वेऽपि कन्यामित्यस्य सन्निहिततरत्वात् तज्जातीयत्वस्यैव वर्णयितुमुचितत्वात्। सजातिपदस्य सकुल्यपरत्वे मानाभावाच्च। दातॄणामभावे त्वाह नारदः। यदा तु नव कश्चित् स्यात् कन्या राजानमाश्रयेत्। अनुज्ञया तस्य वरं प्रतीत्य वरयेत् स्वयम्। सवर्णमनुरूपञ्च कुलशीलवयःश्रुतैः सह धर्मं चरेत्तेन प्रजां चोत्पादयेत्ततः। सवर्णमनुरूपञ्च वरं वरयेदिति गतेन संबन्धः। यत्तु, सवर्णमनुरूपं च वरं प्राप्नोति

अध्याहार्य्यमिति माधवाचार्य्यैरुक्तम्। तदनुज्ञया तस्य वरमिति पूर्व्वार्द्धानवलोकनेन। न चान्ततः सजातीयानामधिकारे यदा तु नैव कश्चित् स्यादिति नोपपद्यते न हि कदाचित् सजातेरभावः सम्भवतीति वाच्यम्। स्वग्रामे कदाचित् सम्भवात्। वचनस्यार्थवत्त्वार्थं तत्परत्वोपपत्तेः। यदा पुनः कश्चिद्दाता न स्यादिति वचनव्यक्त्या सत्यपि सजातौ यदा सोऽपि न ददाति तदैव राजाश्रयणोपपत्तेश्च।

पूर्व्वोक्तवाक्येषु प्रकृतिस्थ इति प्रकृतौ यदि वर्त्तते इति चाभिधानादप्रकृतिस्थेन कृतमप्यकृतमेव भवति। स्त्रीपुंससंबन्धस्य व्यवहाररूपतयाऽप्रकृतिस्थस्य तत्रानधिकारात्। अतएवाप्राप्तव्यवहाराणां बन्धूनां दानानधिकारः कात्यायनेन सूचितः। तथा च नारदः। स्वतन्त्रोऽपि हि यत्कार्य्यं कुर्य्यादप्रकृतिं गतः। तदप्यकृतमेव स्यादस्वातन्त्र्यस्य हेतुतः। कामक्रोधाभिभूता ये भयव्यसनपीड़िताः। रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिं गताः।

पूर्व्ववचनं मदनपारिजातकृद्भिरित्थं व्याख्यातम्। पितृत्वादिना स्वतन्त्रोऽपि सन्नप्रकृतिस्थत्वेन हेतुना परतन्त्रो भवति। तत्कृतं वाग्दानादिकं कार्य्यमकृतमेव वेदितव्यं, यदि तस्मिन् वरे पतनीयदोषा अचिकित्स्यरोगा वा भवेयुः। तदभावे तु तत्कृतमपि वाग्दानादिकं कृतमेव। तदुपरितनन्तु कर्म्म प्रकृतिस्थो निर्वहेत् दृष्टादृष्टदोषाभावात्। यद्यप्रकृतिस्थदत्ताया विवाहसंस्कारो निर्व्यूढ़स्तदा प्रधानकर्म्मणो निष्पन्नत्वेनाधिकारमात्रवैकल्यात्तत्रापि न सर्व्वात्मना प्रत्यावर्त्तनीया कन्या। किन्तु तदप्यकृतमेव स्यादिति विरोधपरिहाराय परिवेत्तृविवाहइव तां प्रत्याहृत्य पुनस्तस्मा एवाधिकारी दद्यात्। अत्र पुनर्विवाहोऽपि परिवेत्तृविवाहवद्विज्ञेय इति।

अथ वृद्धिश्राद्धविचारः॥ तत्र छन्दोगपरिशिष्टं कात्यायनः। स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मसु। पिण्डानोद्वहनात्तेषां तस्याभावेऽपि तत्क्रमात्। स्वपदं पितामहपित्रादिभ्यात्त्वत्तार्थमिति नारायणोपाध्यायाः। सुतपदं कन्यापुत्रोभयपरं, कन्यापुत्त्रविवाहेषु प्रवेशे नववेश्मन इत्यादिवृद्धिश्राद्धविधायकविष्णुपुराणात्। अङ्गुष्ठमेव गृह्णीयात् यदि कामयीत पुमांस एव मे पुत्रा जायेरन्नित्याश्वलायनगृह्यस्वरसात्। पुमांस्ते पुत्त्रो जायतामिति मन्त्रवर्णदर्शनाच्च। अविशेषेण मिथुनाः पुत्रा दायादा इति च निरुक्ते नैगमकाण्डे। तथा। अविशेषेण पुत्त्राणां दायो भवति धर्मतः। मिथुनानां विसर्गादौ मनुः स्वायम्भुवोऽब्रवीत्। अथात्रापरितोषोविदुषामेकशेषादुभयप्रतिपत्तिरनुसरणीया।

संस्कारग्रहणादाद्येनैव संस्कारनिष्पत्त्या द्वितीयादिविवाहस्य तदजनकत्वात् पुत्रस्य द्वितीयादिविवाहे पिता स्वपितृभ्यः पिण्डा न देयाः। किन्तु विवाहकर्त्रैव तत्र वृद्धिश्राद्धं कर्त्तव्यम्। नान्दीश्राद्धं पिता कुर्य्यादाद्ये पाणिग्रहे बुधः। अतऊर्द्धं प्रकुर्व्वीत स्वयमेव तु नान्दिकमिति निर्णयसिन्धुधृतस्मृतेः। नान्दीश्राद्धं पिता कुर्य्यादाद्ये पाणिग्रहे स्वयम्। ततः परं स्वयं पुत्त्रो नान्दीश्राद्धं समाचरेदिति स्मृतिसागरधृताच्च।

आ उद्वहनाद्विवाहपर्य्यन्तम्। अभिविधावाङ् इति तत्त्वकृतः। तेषामित्यनेन सुतसंस्कारकर्मस्वित्यत्र षष्ठ्यन्ततयोपस्थितानां सुतानां परामर्शः। दर्शैते राजमातङ्गास्तस्यैवामी तुरङ्गमा इत्यादिवत्। अतएव, दुःखत्रयाभिघाताज्जिज्ञासा तदवघातके हेताविति सांख्यकारिकाव्याख्यानावसरे, उपसर्ज्जनस्यापि बुद्ध्या सन्निकृष्य तदा परामर्श इति वाचस्पतिमिश्राः। तथा च सुतसंस्कारकर्मस्विति सामा-

न्येनाभिधाय तेषां विवाहपर्य्यन्तमिति तत्रैव विशेषोऽभिहितः। अतएव तेषां पुत्राणामोद्वहनादाविवाहात् पिता स्वपितृभ्यो दद्या-दिति याज्ञवल्क्यटीकायामपरादित्यः। ततश्च विवाहोत्तरभाविषु पाकयज्ञसंस्थाहविर्यज्ञसंस्थासोमसंस्थादिषु गर्भाधानादिषु च पिता वृद्धिश्राद्धं न करणीयम्। पाकयज्ञसंस्थादयः खल्वष्टचत्वा-रिंशत्संस्कारमध्ये गौतमेन पठिताः। न चैवं तेषामित्यनति-प्रयोजनमिति वाच्यम्। तेषामिति बहुवचनोपन्यासेन सकल-सुतसंस्कारे पितुः श्राद्धकरणज्ञापनार्थत्वात् तस्य। अन्यथा सकृत् कृते कृतः शास्त्रार्थ इति न्यायादेकस्यैव सुतस्य संस्कारकर्मसु श्राद्धं कुर्य्यादित्यपि स्यादाशङ्का। सा मा भूदिति विस्पष्टार्थं तदुपा-दानमित्याख्येयम्। तेषामित्यनेन पितॄणां परामर्श इत्यपरे। तत्रापि तुल्यमनतिप्रयोजनत्वं तुल्यञ्च समाधानमित्यनुसन्धेयम्।

पूर्व्वार्द्धे पिण्डदस्य पितुरुपस्थितत्वात्तदभावे इत्यत्र तथाभूत-स्यैव तत्पदेन परामर्शः। तथा च पिण्डदस्य पितुरभावेऽपि तत्-क्रमात् पितृक्रमात् पितृभ्योदद्यादित्यर्थः। पिण्डदस्य पितु-रभावश्च पितुर्मरणात् पिण्डदानानधिकाराद्वेति न विशेषः। एवञ्च पितुर्मरणे व्रतादिना पिण्डदानानधिकारे वा पितुरेव पितृगण-मातामहगणानां श्राद्धं कर्त्तव्यमित्यायाति। तेषामित्यस्य पितृ-परामर्शकत्वपक्षे तु पूर्वमुपात्तानां पितुः पितॄणामिव परामर्शात् सुतरां तथा। न चैवं तत्क्रमादित्यस्यानुवादापत्तिरिति तत्त्व-कारोक्तं युक्तमिति वाच्यम्। तेषामित्यनेन सुतानां पितॄणाञ्च परामर्शसम्भवात् पितृपरामर्शप्रज्ञापनार्थत्वेन तस्यार्थवत्त्वोपपत्तेः। तेषां दाने तत्क्रमादित्यस्य हेतुतयोपन्यासोपपत्तेश्च। यस्मा-त्तस्याभावेऽपि तत्क्रमोमुनिभिरनुशिष्यते तस्मात्तेषां दद्यादिति।

यत्तु, कर्म्मानर्हेऽप्यशक्ते वा पितरि प्रेतितेऽपि वा। पितृवद्भ्रातृपुत्रन्तु संस्कुर्य्यात् सोदरः पितुः। स्वस्यैव पितरः पूज्याः स्वस्य मातामहा अपि। श्राद्धे नान्दीमुखे तस्मिन्निति धर्म्मस्य निश्चयइति स्मृतिसागरलिखितशङ्खवचनम्। तदपि पितुस्तत्सोदरस्य च पितॄणां मातामहानाञ्चैक्यादविरुद्धम्। यदा तु पितामहः सापत्नभ्राता वा कर्त्ता, तदा तु बालस्य पितुरेव पितरोमातामहाश्च ताभ्यां नान्दीमुखे पूजितव्या इति स्मृतिसागरः। तत्रापि विशेषमाह पृथ्वीचन्द्रोदयादौ यमः। पितरो जनकस्येज्या यावद्व्रतमनाहितम्। समाहितव्रतः पश्चात् स्वान् यजेत पितामहान्। एवञ्च समावर्त्तनपर्य्यन्तं पितुः पितॄणां, समावर्त्तनात् परतस्तु स्वपितॄणां श्राद्धं कर्त्तव्यम्। समावर्त्तनेनैव वेदव्रतसमाधानात्।

यत्तु, तस्य फलभागितया प्रधानस्य संस्कार्य्यस्य क्रमात्तेषां पितॄणां दद्यादिति तत्त्वकृतां व्याख्यानम्। तच्चिन्त्यम्। संस्कार्य्यस्यानुपात्तत्वेन तच्छब्दादुपस्थित्यसम्भवात्। न च संस्कारफलभागितया प्राधान्यात् संस्कार्य्यस्योपस्थितिरिति वाच्यम्। फलभागित्वस्य प्राधान्यप्रयोजकत्वे मानाभावात्। शेषलक्षणे, पुरुषश्च कर्म्मार्थत्वादिति सूत्रेण फलभागिनोऽपि पुरुषस्यौदुम्बरीसम्मानादिकर्म्मसु शेषत्वोक्तेः। प्राधान्ये वा, तस्यार्थत्वमेव न शब्दोपात्तत्वमिति तच्छब्दादनुपस्थितिस्तदवस्थैव। किञ्चैवं संस्कारजन्यफलभागितया संस्कार्य्यस्येव संस्कारकर्त्तृतया संस्कर्त्तुरप्युपस्थितेस्तस्यापि तच्छब्देन परामर्शः कथं न स्यात्। संस्कर्त्तुरनुपात्तत्वेन तच्छब्दादनुपस्थितिरिति तैरेवोक्तम्। तच्चान्यत्रापि समानम्। सुतसंस्कारकर्म्मस्वित्यत्र संस्कार्य्यस्योपस्थितिस्तु स्यात्। तथापि तस्याभावे इत्यत्र पितुः परामर्शस्याविवादात्तत्क्रमा-

दित्यत्रापि पितुरेव परामर्शोवर्णयितुमुचितो न संस्कार्य्यस्य। सन्निहिते बुद्धिरन्तरङ्गा इति न्यायात् । एतेन तत्क्रमात् संस्कर्त्तृ-क्रमादित्यपरादित्यमदनपारिजातादिमतमपि चिन्तनीयम् ।

किञ्च। तेषामित्यनेन संस्कार्य्यपितुः पितॄणां परामर्शात् तत्क्रमादिति तच्छब्दस्य संस्कार्य्यपरत्वे तत्क्रमादित्यस्यान्वयानुपपत्तेः। न च तेषामिति निर्व्विशेषितपितृमात्रपरामर्शकमिति तत्प्रकारोक्तं युक्तमिति वाच्यम्। तच्छब्दस्य प्रकृतवाचितया विशेषितानामेव परामर्शकत्वौचित्यात्। न हि राजपुरुष आगच्छति तस्योपचारविशेषः क्रियतामित्युक्ते निर्व्विशेषितस्य यस्य कस्यचित् पुरुषस्योपचारविशेषः क्रियते। निर्व्विशेषितपितृमात्र-परामर्शेऽप्युपात्तस्य पितुरेव क्रमस्य वर्णनायां न काचिदनुपपत्तिरिति ध्येयम्। तस्मात्तेषामित्यस्य निर्व्विशेषितपितृमात्र-परामर्शकत्वपक्षेऽपि तत्क्रमादित्यत्रोपात्तपितृक्रमएव वर्णयितुमुचितो न त्वनुपात्तसंस्कार्य्यक्रमः पूर्व्वोक्तयुक्त्या संस्कार्य्यस्य तच्छब्देन परामर्शानुपपत्तेः।

यत्तु, तेषां पितुः सम्प्रदानभूतानां तत्क्रमादित्यनेन संस्कार्य्य-पितुरनुप्रवेशात् संस्कार्य्यपितुः प्रपितामहेतरपञ्चानामिति नारायणोपाध्यायमतम्। तदपि चिन्त्यम्। पितृनुप्रवेशे तेषामित्यस्य, संस्कार्य्यपित्रादित्रिकस्य श्राद्धे तन्मातामहवर्गस्याप्रवेशे तत्क्रमादित्यस्य चांशतोबाधापत्तेः। पितरोयस्य भोज्यन्ते श्राद्धे नान्दीमुखादिके। मातामहाश्च तस्यैव भोज्यास्तत्र प्रयत्नतः इति स्मृतिसागरलिखितवचनात्। पूर्व्वोक्तयुक्त्या तत्क्रमादित्यनेन संस्कार्य्यक्रमस्यानवगतेश्च।

एतेन तत्स्वाभावे त्विति पाठे प्रक्रान्तव्यवच्छेदकतुशब्देन

संस्कार्य्यपितुः पितृगणमातामहगणानां सुतरां बाधितत्वमित्यसङ्गतं वचनम्। तुशब्दोह्यभिधानकाण्डे अवधारणाद्युच्चावचेष्वर्थेषु पठ्यते। नावश्यं भेदपक्षान्तरार्थेनैवानेन भवितव्यमिति किञ्चिन्नियामकमस्ति। भवेदप्येतदेवं, यदि तच्छब्देन संस्कार्य्यः परामष्टुं पार्य्येत। न त्वेतत् सम्भवतीत्युक्तमादावेव। अतएव परिशिष्टचन्द्रिकायां, तस्याभावेऽपि तत्क्रमात् पितुः पितृभ्यएव दद्यात्, तुशब्दोऽप्यर्थे इत्युक्तम्। स्मृतिसागरे काश्यपोऽपि। संस्कार्य्यस्य पितुः पूज्याः पितरः श्राद्धकर्म्मणि। मातामहाश्च तस्यैव पूजितव्याः प्रयत्नतः।

यत्तु, मृते पितरि पुत्रस्य संस्कारे समुपस्थिते। संस्कार्य्यस्यैव पितरः पूज्या नान्दीमुखे तथा। मातामहाश्च तस्यैव विपरीतं न चिन्तयेत्। विपरीते कृते तत्र न संस्कारो न च क्रियेति तत्रैव काश्यपवचनान्तरम्। तत् कल्पान्तरार्थम्। स्मृतिसागरस्वरसोऽप्येवमेव। तत्रैव तात्पर्य्यकारः। यद्यन्यपुत्रसंस्कारं कुरुतेऽन्यः प्रसादतः। तदा तु पूजयेत् सोऽपि संस्कार्य्यस्य पितुः पितॄन्। दुश्चिकित्स्यव्याधियुतो यदि वा पतितः पिता। तथापि सुतसंस्कारे पितुरेव पितॄन् यजेत्। स्मृतिः। पितरोजनकस्येज्याः सुतसंस्कारकारकैः। समाहितव्रतः पश्चात् स्वान् यजेत पितामहान्। गार्ग्यः। अथान्यः परपुत्रस्य संस्कर्त्ता चेत् कदाचन। सोऽपि संस्कार्य्यपितरं तथा मातामहं यजेत्। स्मृत्यन्तरम्। दुश्चिकित्स्यव्याधियुते पतिते जनकेऽपि च। पूज्याः संस्कार्य्यपितरस्तस्य मातामहा अपि। ऋष्यशृङ्गः। पिता चेत् पतितस्तस्य संस्कार्य्यस्य कदाचन। संस्कार्य्यस्य तदा पूज्याः पितुः पित्रादयः क्रमात्। पूज्यामातामहाद्याश्च संस्कार्य्यस्यैव नान्यथा। यस्मात् प्रतिनिधिर्नास्ति

पतितस्य मृतस्य च। अकृत्वा बालसंस्कारं पिता तस्य मृतो-यदि। कुर्य्युरेतस्य संस्कारमुक्ताः शास्त्रेण ये पुरा। किमत्र बहुनो-क्तेन संक्षेपः श्रूयतामिह। पितुरन्त्येश्च यैः कैश्चिद्बालसंस्कारकर्त्तृभिः। बालस्य पितरः पूज्यास्तस्य मातामहादयः। तत्र नान्दीमुख-श्राद्धे तेन धर्म्मो न हीयते। एतानि स्मृतिसागरधृतानि। संस्कार्य्यस्येत्यादेरयमर्थः। पितुः पित्रादयः संस्कार्य्यस्य क्रमात् पूज्याः। ततश्च पितुः पित्रादयोऽपि संस्कार्य्यसंबन्धित्वेनोल्लेख-नीयाः। अतएवोत्तरार्द्धे संस्कार्य्यस्यैव मातामहादीनां पूज्यत्व-मुक्तम्। अन्यथा क्रमादित्यनुपपत्तेः। उपसंहारश्लोके तु व्यक्तो-ऽयमर्थः।

न चैतदेकवाक्यतया तत्क्रमादित्यस्य संस्कार्य्यक्रमादित्यर्थः स्यादिति वाच्यम्। तच्छब्दस्य प्रकृतवाचितया सन्निहिततरस्य पितु-रेव परामर्शेन संस्कार्य्यपरामर्शकत्वानुपपत्तेः। वचनान्तरैकवाक्य-तया पितृक्रमपरत्वोपपत्तेश्च। तस्मादुभयथा शास्त्रदर्शनाद्विकल्प-एवायं पितृक्रमाद्वा संस्कार्य्यक्रमाद्वेत्यादरणीयम्। छन्दोगानान्तु स्वशास्त्रोक्तः पितृक्रमोऽन्येषान्त्वन्यथाऽपीति युक्तमुत्पश्यामः। यदपि समावर्त्तनपर्य्यन्तं पितुः पितॄणां परतस्तु संस्कार्य्यपितॄणां श्राद्धं यमादिभिरुक्तम्। तदपि च्छन्दोगानां न भवति। छन्दोगपरिशिष्ट-कृता विवाहपर्य्यन्तमेव पितुः पितॄणां श्राद्धस्योक्तत्वात्।

शास्त्रोक्तान् संस्कारकर्त्तॄनाहुः स्मृतिसागरे स्वयम्भुविश्वामित्र-दक्षाः। पिता पितामहाद्याश्च सोदरभ्रातरः पितुः। सापत्न्य-भ्रातरश्चैव तदभावे यथा शृणु। संस्कार्य्यस्यैव ये तत्र भ्रातरश्च सहोदराः। सापत्न्या भ्रातरोवाऽपि सकुल्यामातरश्च वा। सर्वाभावेऽपि संस्कुर्य्युरनिन्द्याश्च सजातयः। कर्त्तारः कथिताश्चैते

प्रशस्ताश्चोत्तरोत्तराः। उत्तरोत्तरेषां प्राशस्त्यं प्रतिलोमक्रमेण बोद्धव्यम्। अप्रशस्ता इति वा च्छेदः।

द्वितीयविवाहे तु जीवत्पितृकोऽपि पितामहादिभ्यः श्राद्धं कुर्य्यात्। पूर्वलिखितवचनात्। एवं स्वपुत्रसंस्कारेष्वपि। स्वपितृभ्यः पिता दद्यादित्यादिच्छन्दोगपरिशिष्टात्। उद्वाहे पुत्रजनने पित्रेष्ट्यां सौमिके मखे। तीर्थे ब्राह्मणआयाते श्राद्धी स्याज्जीवतः पितुरिति मैत्रायणीयपरिशिष्टाच्च। यत्तु, जीवत्पितृकस्य द्वितीयविवाहे न वृद्धिश्राद्धमिति वाचस्पतिमिश्रैरुक्तम्। तदुक्तवचनानवलोकनेन। यदपि, नान्दीमुखेभ्यः श्राद्धन्तु पितृभ्यः कार्य्यमृद्धये। ततोविवाहः कर्त्तव्यः शुद्धः शुभसुतप्रद इति ब्रह्मपुराणे श्राद्धेन विवाहस्य शुद्धत्वाभिधानेन तदभावादशुद्धत्वप्रतीतेर्द्वितीयादिविवाहकारिणा स्वयमवश्यं स्वपितृभ्यः श्राद्धं कर्त्तव्यमिति तत्त्वकृद्भिरुक्तम्। तदपि चिन्त्यम्। तस्यावश्यकर्त्तव्यत्वे प्रमाणाभावात्। कर्म्माङ्गश्राद्धादन्यस्य ऋद्ध्यादिफलकस्य स्वोक्तनान्दीमुखानां पितॄणां काम्यश्राद्धान्तरस्य तेनाभिहितत्वेन विवाहकर्त्तुः पित्रादीनां श्राद्धस्य तेनानभिधानाच्च।

मैत्रायणीयपरिशिष्टे, जीवतः पितुरित्यनादरे षष्ठी। तेन जीवन्तं पितरमनादृत्य श्राद्धी भवेदित्यर्थः। स्मृतिसागरकृतोऽप्येवमेव। चतुर्थचरणे, षष्ठेते जीवतः पितुरिति केचित् पठन्ति। पुत्रजनने इति पुत्रजन्मनिमित्तकश्राद्धपरम्। नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयार्थकम्। पुत्रजन्मनि तत् कार्य्यं जातकर्म्मसमं नरैरिति मार्कण्डेयपुराणात्। यत्तु, न जीवत्पितृकः कुर्य्यात् श्राद्धमग्निमृते द्विजः। येभ्यएव पिता दद्यात्तेभ्यः कुर्व्वीत साग्निकः। पितामहेऽप्येवमेव कुर्य्याज्जीवति साग्निकः। साग्निको-

ऽपि न कुर्व्वीत जीवति प्रपितामहे इति सुमन्तुवचनम् । तद्वृद्धि-श्राद्धभिन्नपरम् । अनग्निकोऽपि कुर्व्वीत जन्मादौ वृद्धिकर्म्मणि । येभ्यएव पिता दद्यात्तानेवोद्दिश्य तर्पयेदिति हारीतस्मरणात् । मदनरत्नप्रभृतयोऽप्येवम् । सौमन्तवं पिण्डपितृयज्ञपरमिति पृथ्वी-चन्द्रसमाधानन्तु न समीचीनम् । अग्निमते जीवत्पितृकः श्राद्धं न कुर्य्यादित्यनुपपत्तेः ।

प्रपितामहपर्य्यन्तजीवने श्राद्धं न कर्त्तव्यमित्येतदपि वैकल्पिकम् । प्रपितामहपूर्व्वेभ्योजीवत्पितृपितामहः । भोजयेत् पार्व्वणश्राद्धे प्रत्यक्षौ तौ च पूर्व्ववत् । पूर्व्वेषु त्रिषु दातव्यं जीवेत्तु त्रितयं यदीति हेमाद्रिधृतस्मृतेः । महापितृयज्ञे च श्रूयते । त्रीन् परतरान् पितॄनाचष्टे षष्ठं प्रथमे पिण्डे पञ्चमं द्वितीये चतुर्थं तृतीये सप्तमे निवृत्तिः इति । छन्दोगपरिशिष्टम् । सपितुः पितृकृत्येषु ह्यधिकारो न विद्यते । न जीवन्तमतिक्रम्य किञ्चिद्दद्यादिति श्रुतिः । तथा, जीवन्तमतिदद्याद्वा प्रेतायान्नोदके द्विजः । पितुः पितृभ्यो वा दद्यात् स पितेत्यपरा श्रुतिः । तदत्र श्रुतिद्वैधोपन्यासेन विकल्पः सुव्यक्तमेवोक्तः ।

तथा पिण्डपितृयज्ञमुपक्रम्याश्वलायनकल्पसूत्रम् । अपि जीवान्त श्रा त्रिभ्यः प्रेतेभ्यएव निपृणीयादिति गौतमः, क्रिया ह्यर्थकारिता । अस्यार्थोवृत्तिकृद्भिर्व्याख्यातः । आदिमध्यान्तशब्दैः पितृपितामहप्रपितामहा उच्यन्ते । जीवोऽन्तोयस्य स जीवान्तः । अपिशब्देन जीवादिर्जीवमध्य इति च लभ्यते । सर्व्वजीव इति च । त्रयाणामेकस्मिन् द्वयोः सर्व्वेषु वा जीवत्सु यावदर्थं परान् पितॄन् गृहीत्वा प्रेतेभ्यस्त्रिभ्योदद्यादिति गौतमोमन्यते । क्रिया ह्यर्थकारिता मरणपदार्थप्रवृत्ता यस्मात् क्रियेत्यन्तेन ।

एतेन, पितरि पितामहे प्रपितामहे च जीवति नैव कुर्य्यादिति विष्णुवचनमपि व्याख्यातम्। तस्माज्जीवत्पित्रादित्रिकोऽपि तत्पूर्वेषां श्राद्धं कर्त्तुमर्हति। एतेन, विष्णुवचनमात्रदर्शिना तत्स्वकारेण जीवत्पित्रादित्रिकस्य वृद्धिश्राद्धं नास्तीति यदुक्तं, तदपि चिन्त्यम्।

यत् पुनः श्राद्धविवेके ब्रह्मपुराणवचनम्। पिता पितामहश्चैव तथैव प्रपितामहः। त्रयोह्यश्रुमुखाह्येते पितरः परिकीर्त्तिताः। तेभ्यः पूर्वतरा ये च प्रजावन्तः सुखोचिताः। ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते। कर्म्मण्यथाभ्युदयिके माङ्गल्यवति शोभने। जन्मन्यथोपनयने विवाहे पुत्रकस्य च। पितॄन् नान्दीमुखान् नाम तर्पयेद्विधिपूर्वकम् इति। तत् कल्पान्तरम्। एतेन, वृद्धमुख्याश्च पितरोवृद्धिश्राद्धेषु भुञ्जते इति स्मृतिरपि व्याख्याता। अतएव, ये स्युः पितामहादूर्द्ध्वं ते स्युर्नान्दीमुखा इति इति मार्कण्डेयपुराणवाक्यमपि सङ्गच्छते। विवाहादौ च कर्त्तव्यं सर्वं सम्यक् क्रमोदितम्। पितरश्चात्र संपूज्याः ख्याता नान्दीमुखाश्च ये इत्यनेन तत्रैव विवाहादौ नान्दीमुखसंज्ञानां पितॄणां श्राद्धविधानात्। एकत्र वृद्धप्रपितामहादीनामन्यत्र प्रपितामहादीनां नान्दीमुखसंज्ञाविधानस्य प्रकारन्तरेणानुपपत्तेः।

एतेन, नान्दीमुखे विवाहे च प्रपितामहपूर्वकम्। वाक्यमुच्चारयेद्विद्वानन्यत्र पितृपूर्वकमिति वृद्धवशिष्ठवचनमपि व्याख्यातम्। परिशिष्टोयमेतदिति धनञ्जयप्रभृतयः। यत्तु, नान्दीमुखे पुत्रादिसमृद्धीनामादिभूते विवाहे। विशेषणन्तु विवाहादेव पुत्रादिलाभज्ञापनाय। चस्त्वर्थः अन्यत्रप्राप्तपित्रादिक्रमव्यवच्छेदाय इति

तत्वकृद्भिर्व्याख्यातम्। तच्चिन्त्यम्। नान्दीमुखशब्दस्य रूढ्या श्राद्धविशेषपरत्वस्यौत्सर्गिकत्वात् तत्परित्यागे हेत्वभावात्। नाना-ऽवयवशक्त्यपेक्षया एकस्याः समुदायशक्तेर्लघुत्वादिति तैरेवोक्तम्। उल्लेखविधायकवाक्ये तद्विशेषणस्याश्लिष्टत्वात्। अन्यत्र प्राप्तस्य पित्रादिक्रमस्यान्यत्र प्रसक्त्यभावेन तद्व्यवच्छेदस्य बन्ध्यापुत्र-व्यवच्छेदवदसम्भवात्, पूर्व्वोक्तयुक्त्या चकारस्य वाक्यभेदार्थत्व प्रतीत्या तुकारार्थत्वानुपपत्तेश्च। यदप्युक्तं, नान्दीमुखपदस्य श्राद्धपरत्वेऽनेकवचनप्राप्तपितृपूर्वकाभिलापबाधापत्तेरिति। तदपि चिन्त्यम्। यतो जनकादीनां देवतात्वपक्षे पितृपूर्वकाभिलापः प्राप्नोति प्रपितामहादीनां देवतात्वपक्षे तु प्रपितामहपूर्वकाभि-लापोविधीयते इति केन किं बाध्येत। न च प्रपितामहादीनां देवतात्वपक्षे प्रपितामहपूर्व्वकवाक्योच्चारणविधानमित्यत्र प्रमाणं नास्तीति वाच्यम्। नान्दीमुखे प्रपितामहपूर्वकवाक्योच्चारण-विधानादेव तेषां देवतात्वावगतेः। वचनान्तरदर्शनाच्च। अतएव, प्रपितामहपूर्वकवाक्योच्चारणमपि नान्दीमुखे प्रपितामहमादा-योर्द्ध्वतनाभिप्रायेण विवाहे तु प्रपितामहमादायाधस्तनाभिप्रायेण व्यवतिष्ठते।

यत्तु, नान्दीमुखानां श्राद्धन्तु कन्याराशिगते रवौ। पौर्ण-मास्यान्तु कर्त्तव्यं वराहवचनं यथेति, अमावास्यायां पितरः पूज्यानान्दीमुखा अपीति, ब्रह्मपुराणवचनाभ्यां कन्यागता-परपक्षे नान्दीमुखानां श्राद्धविधानात् तद्विषयं वृद्धप्रपितामहा-दीनां नान्दीमुखसंज्ञाविधानमिति। तच्चिन्त्यम्। नान्दीमुखसंज्ञा-मभिधाय कर्म्मण्यथाभ्युदयिके इत्यादिना तेषामेवाभ्युदयिके देवतात्वाभिधानात्। ये स्युः पितामहादूर्द्ध्वं ते स्युर्नान्दीमुखा-

स्विति इति श्राद्धविवेकलिखितकन्यागतापरपक्षप्रकरणस्थब्रह्म-पुराणवचनान्तरेणैव तत्र पृथङ्नान्दीमुखसंज्ञाविधानाच्च। अत-एवैकत्र वृद्धप्रपितामहादीनामन्यत्र प्रपितामहादीनां नान्दीमुख-संज्ञाविधानमुपपद्यते।

स्वजनकादीनां देवतात्वप्रतीतेर्ब्रह्मपुराणीयप्रपितामहपित्रादि-त्रिकपक्षो जीवत्पित्रादित्रिकयजमानविषयः। यस्य त्रयोजीवन्ति स नैव कुर्य्यादिति विष्णूक्तनिषेधो वृद्धिश्राद्धेऽप्यतिदेशात् प्राप्त इति चेन्न, उपदेशेनातिदेशबाधादिति कल्पतरुः। युक्तश्चैतत्। पित्रादीनां त्रयाणामपि विद्यमानत्वात् चतुर्थादयः प्रजा-वन्तः चतुर्थादिसन्निहितत्वेन पित्रादित्रयाणां तद्विषयदुःखभाजन-त्वेन सन्निहितमरणधर्म्मकत्वाच्चाशुमुखत्वमिति मदनपारिजातः। तेनैतन्मते जीवत्पित्रादित्रिकस्य विष्णूक्तपार्वणनिषेधपक्षेऽपि तेन तत्पूर्व्वेषां वृद्धिश्राद्धं कर्त्तव्यमित्युक्तम्। कात्यायनादि-सूत्रेभ्यः स्वजनकादीनां देवतात्वावगतेर्ब्रह्मपुराणीयदेवतापक्षः शाखिभेदव्यवस्थित इति हलायुधः। शूलपाणिस्तु, यदा त्रयः पुरुषाः प्रव्रजिताः पतितावा मृतास्तदा ब्रह्मपुराणीयपक्ष इत्यभि-धाय, तस्मात् श्राद्धार्हपित्रादित्रिकस्य यजमानस्य वृद्धिश्राद्धे पित्रादित्रयएव नान्दीमुखाः श्राद्धानर्हपित्रादित्रिकस्य प्रपितामह-पित्रादयइत्युपसंहृतवान्।

आभ्युदयिकश्राद्धमुपक्रम्य आश्वलायनगृह्यपरिशिष्टम्। तदिद-मेके मातॄणां पृथक् कुर्व्वन्त्यथ पितॄणां ततोमातामहानां-मिति त्रितयमिच्छन्ति। तस्मात् जीवत्पिता सुतसंस्कारेषु मातृमातामहयोः कुर्य्यात् पित्रोर्जीवतोर्मातामहस्यैव कुर्य्यात् त्रिषु जीवत्सु न कुर्य्यात्। मातृमातामहयोस्तद्वर्गयोः। एव-

मग्नेऽपि। त्रिषु वर्गादिषु। जीवेत्तु यदि वर्गाद्यस्तं वर्गन्तु परित्यजेदिति स्मृतेः। एतच्च, ये मातॄणां पृथक् कुर्वन्ति तेषामेव। अन्येषान्तु जीवन्तमतिक्रम्य तत्पूर्वेषां श्राद्धं कर्त्तव्यम्। दाक्षिणात्यास्तु, सर्वत्रैव तदाचरन्ति। गोभिलीयानान्तु जीवत्पितृकस्य विकल्पः छन्दोगपरिशिष्टवचनेन पूर्वमुक्तः। स च वृद्धिश्राद्धभिन्नविषयः। तस्य प्रकरणभेदेनोक्तत्वात्। वृद्धिश्राद्धेऽप्यतिदेशात्तत्प्राप्तावपि विशेषवचनस्वरसात् करणपक्षमेव तत्र समीचीनमुत्पश्यामः। दामोदराचार्य्यास्तु, स्त्रीयपुत्रस्य जन्मादौ वृद्धिश्राद्धे ह्युपस्थिते। जीवत्पिता स्वपितरं विप्रवत्तत्र भोजयेदिति वचनमुपदर्श्य, एतेन वृद्धिश्राद्धएवाधिकारो नान्यत्रेत्युक्तवान्। स्वपितरं भोजयेदित्यपि वैकल्पिकम्। वृद्धिश्राद्धादन्यत्र नित्यवदधिकाराभाववचनमप्यसङ्गतम्। म्रियमाणे तु पितरि पूर्वेषामेव निर्व्वपेत्। विप्रवद्वाऽपि तं श्राद्धे स्वकं पितरमाशयेदिति पार्वणे मनूक्तेः।

एवं जनन्याः कन्यादानाधिकारे तयाऽपि वृद्धिश्राद्धं करणीयम्। तथा च ऋष्यशृङ्गः। स्त्रीणां श्राद्धे नाधिकारः पार्वणादौ विधीयते। कन्यावृषसमुत्सर्गे त्वधिकारो भवेत् स्त्रियाः। कन्यावृषसमुत्सर्गे स्त्रीणामपि नान्दीमुखाधिकार इति स्मृतिसागरः। कस्याञ्चिदवस्थायां पार्व्वणाधिकारमप्याह तत्रैव विष्णुः। कुले यत्र न कश्चित् स्यात् श्राद्धदः पार्व्वणे विधौ। तत्र पत्न्यपि कुर्व्वीत श्राद्धं पर्वणि पर्वणि। स्मृतिरत्नावल्याम्। स्वभर्त्तृप्रभृतित्रिभ्यः स्वपितृभ्यस्तथैव च। विधवा कारयेत् श्राद्धं यथाकालमतन्द्रिता।

यत्तु, मात्राऽपि वृद्धिश्राद्धं विनैव कन्या दीयते तस्यास्तदनधिकारादिति तत्त्वकङ्किनतम्। तदुक्तवचनानवलोकनेन। यच्चापरमुक्तम्। मृताहनि तु कर्त्तव्या स्त्रीणामप्युत्तरक्रिया। प्रति-

संवत्सरं राजन्नेकोद्दिष्टविधानत इति विष्णुपुराणीये सपिण्डनोत्तर-क्रियायामेकोद्दिष्टविधानेनान्यत्रानधिकारः। अत्र स्त्रीणामिति प्रकरणात् कर्त्तरि षष्ठीति। तदपि चिन्त्यम्। विष्णुपुराणे पुंसा-मुत्तरक्रियाकर्त्तृ नभिधाय प्रकरणशेषे तद्वचनाभिधानेन स्त्रीणा-मुत्तरक्रिया मृताहनि कर्त्तव्या न दर्शादाविति प्रतीतेः। स्त्रीणामप्येव-मेवैतदेकोद्दिष्टमुदाहृतम्। मृताहनि यथान्यायं नृणां यदुदितं द्विजो-दितमिति तल्लिखितमार्कण्डेयपुराणीयेनैकवाक्यतया विष्णुपुरा-णीयेऽपि शेषिकयाएव षष्ठ्या वर्णयितुमुचितत्वाच्च। अन्यथा स्त्रीणां दर्शश्राद्धाधिकारबोधकवचनविरोधापत्तेः। दर्शादौ स्त्रीणां पृथक् श्राद्धन्तु केषाञ्चिदेव न सर्व्वेषामिति। भवतु वा कर्त्तरि षष्ठी, तथापि मृताहनीति प्रतिसंवत्सरमिति चोक्तेः भर्त्रादेः सांवत्सरिकश्राद्धमेवै-कोद्दिष्टविधानेन स्त्रीभिः कर्त्तव्यं न त्वमावस्यादिमृतस्यापि पार्वणविधिनेत्येतावन्मात्रमवगम्यते। सपिण्डीकरणादूर्द्ध्वं पित्रो-रेव हि पार्वणमिति कात्यायनस्मरणात्। अपुत्त्रा या मृताः काश्चित् स्त्रियो वा पुरुषाश्च ये। तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणमित्यापस्तम्बवचनाच्च। सर्वत्रानधिकारे मृताहनी-त्यादिविशेषोपदेशवैयर्थ्यप्रसङ्गात्।

यदपि, एतत् सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपीति याज्ञ-वल्क्यवचनमुपदर्श्य, श्राद्धेषु मध्ये एतत् श्राद्धद्वयमेव स्त्रियाः कर्त्तव्यं न त्वाभ्युदयिकश्राद्धादि। अत्र च स्त्रिया इति वा कर्त्तरि कृत्ये इति कर्त्तरि षष्ठीति कर्त्तृत्वनियमः। वृद्धिश्राद्धादौ स्त्रीणां भोजनदर्शनात्र भोक्तृत्वनियमइत्युक्तम्। तदपि चिन्त्यम्। पूर्व्वोपदर्शितवचनजातविरोधेन श्राद्धेषु मध्ये एतत् श्राद्धद्वयमेवेति नियमकल्पनाऽनुपपत्तेः। एतद्वचनादेतत्श्राद्धद्वयाधिकारेऽपि

वचनान्तरात् श्राद्धान्तराधिकारे बाधकाभावाच्च। अपि च, स्त्रिया इत्युद्देश्यत्वलक्षणा षष्ठी, याज्ञवल्क्येन पार्व्वणैकोद्दिष्टविकृतीभूतपुंसपिण्डनाभिदेशादित्यनेन तिथितत्त्वएव परतः श्राद्धतत्त्वे च स्वयमेवाङ्गीकृता। श्राद्धकर्त्तृप्रकरणाभावाच्च कर्त्तरि षष्ठीवर्णनमनुचितम्। भर्त्तृपिण्डेषु स्त्रीणां भोक्तृत्वान्मा भूङ्गोक्तृत्वनियमः। उद्देश्यत्वस्य षष्ठ्यर्थतायां न कश्चिद्विरोधः। एवञ्च सपिण्डनैकोद्दिष्टयोः स्त्र्युद्देश्यत्वं न पार्व्वणादीनामिति तस्यार्थः।

ततश्च वृद्धिश्राद्धे मातृपक्षस्य सर्व्वेषामननुमतत्वाद्याज्ञवल्क्यीये मतेऽपि वृद्धिश्राद्धे मातृपक्षोनास्तीति पर्य्यवस्यति। अतएव पार्व्वणमभिधाय, एवं प्रदक्षिणं कृत्वा वृद्धौ नान्दीमुखान् पितॄन्। यजेत दधिकर्क्कन्धूमिश्रान् पिण्डान् यवैः क्रियेत्यनेन पार्व्वणदेवतानामेव वृद्धिश्राद्धदेवतात्वं याज्ञवल्क्येनोक्तम्। तदेवं व्यवस्थिते शास्त्रार्थे न काचिदनुपपत्तिः। निबन्धृभिरेव तु व्यवस्थितानामपि वचनानां सर्व्वविषयत्वमभ्युपगच्छद्भिराकुलीकृतः शास्त्रार्थः। स्त्रिया इति षष्ठीयमित्यत्रापि प्रमाणं नास्ति। स्त्रियै इति चतुर्थीनिर्देशस्यापि सम्भवात्। तस्मात् षष्ठीनिर्देशेऽप्युद्देश्यत्वमेव तस्या अर्थ इत्यास्थेयम्।

अत्र च गोभिलीयानां श्राद्धकल्पे, नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वाहोच्यतामिति षण्णां निर्देशात्, छन्दोगपरिशिष्टे च, आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः। षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेदित्युपक्रम्य षण्णामेवानुष्ठानस्योक्तत्वात्, नान्दीमुखाः पितरः पितामहाः प्रपितामहा मातामहाः प्रमातामहाद्वृद्धप्रमातामहाश्च प्रीयन्तामिति पारस्करगृह्ये च तथैव निर्दे-

श्रात्, नान्दीमुखाः पितरः पितामहाः प्रपितामहा मातामहाः प्रमातामहा वृद्धप्रमातामहाः प्रीयन्तामिति कात्यायनसूत्राच्च, गोभिलीयपारस्करीयादिभिः पित्रादिषड्दैवतं वृद्धिश्राद्धं कर्त्तव्यम् ।

न चैवं, मातृणामग्रतः श्राद्धं पितृणां तदनन्तरम् । ततो मातामहानाञ्च वृद्धौ श्राद्धत्रयं स्मृतम् । तथा, उत्सवानन्दसन्ताने यज्ञोद्वाहादिमङ्गले । मातरः प्रथमं पूज्याः पितरस्तदनन्तरम् । ततो मातामहा राजन् विश्वेदेवास्तथैव चेति शातातपमत्स्यपुराणादिवचनानां निर्विषयत्वं स्यादिति वाच्यम् । प्रतिवेदं शाखानामनेकत्वात् केषाञ्चिच्छाखिनां तद्विषयत्वसम्भवात् । अतएवाश्वलायनगृह्यपरिशिष्टे, तदिदमेके मातृणां पृथक् कुर्व्वन्त्यथ पितृणां ततो मातामहानामिति त्रितयमिच्छन्तीत्युक्तम् । एतेन छन्दोगव्यतिरिक्तानां सर्व्वेषामेवाभ्युदयिके मातृपक्षोऽस्तीत्यविचारिताभिधानमेतत् । छन्दोगानामपि तथेति त्वतीवासङ्गतम् । स्वशास्त्रविरोधात्तदसम्भवात् ।

शातातपादिवचनानां सामान्यगोचरत्वे तु स्वशास्त्रोक्तं प्रयोगमनुष्ठायेच्छया पुनर्मात्रादिनवदेवतानां श्राद्धान्तरं प्रयोगान्तरेणानुष्ठेयम् । वैश्वदेववलिकर्म्मणोश्छन्दोगपरिशिष्टे तथोपदेशात् । तद्यथा । न स्यातां काम्यसामान्ये जुहोतिवलिकर्म्मणी । पूर्व्वं नित्यविशेषोक्तजुहोतिवलिकर्म्मणोः । काममन्ते भवेयातां न तु मध्ये कदाचन । नैकस्मिन् कर्म्मणि तते कर्म्मान्यत्तायते यतः । गोभिलीयैस्तु प्रयोगान्तरेणापि मातृश्राद्धं न कर्त्तव्यम् । न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते । स्वभर्त्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृतेति छन्दोगपरिशिष्टे तेषां तन्निषेधात् । यतः स्वभर्त्तॄणां पिण्डांशेभ्य एव योषितां तृप्तिरतोऽवसानदिनादन्यत्र

ताभ्यः पृथङ् न दद्यात्। अवसानदिने तु दद्यादेव। तत्र भर्त्तुः श्राद्धाभावात्। तथा शातातपः। सपिण्डीकरणादूर्द्धं यत् पितृभ्यः प्रदीयते। सर्वेष्वंशहरा माता इति धर्म्मेषु निश्चयः। बृहस्पतिः। स्वेन भर्त्रा सह श्राद्धं माता भुङ्क्ते स्वधामयम्। पितामही च स्वेनैव स्वेनैव प्रपितामही।

केचित् खल्वमावास्यादौ योषितां पृथक् श्राद्धमिच्छन्ति। तथा च स्मृतिचन्द्रिकाचतुर्वर्गचिन्तामणिप्रभृतिषु चतुर्विंशतिमतम्। अन्वष्टकं वर्जयित्वैकं स्त्रीणां नास्ति पृथक् क्रिया। केचिदिच्छन्ति नारीणां पृथक् श्राद्धं महर्षयः। तथा मात्स्ये अग्निमत्श्राद्धाध्याये पित्रादीनां पिण्डपूजनाम्समभिधायोक्तम्। ततः कृत्वाऽन्तरे दद्यात्तत्पत्नीभ्यः कुशान् बुधः। तद्वत् पिण्डादिकं कुर्य्यादावाहनविसर्जनम्। तथा, मासि मासि पितृभ्योदद्यादित्युपक्रम्य सांख्यायनगृह्यम्। भुक्तवत्सु पिण्डान् दद्यात्, पुरस्तादेके पिण्डान्,पश्चिमेन तत्पत्नीनां किञ्चिदन्तर्धाय। तदेवं केषाञ्चिच्छाखिनामवसानदिनादन्यत्रापि स्त्रीणां पृथग्दानमस्ति, न योषिद्भ्यइत्यनेन तन्निषिध्यते। यथा विहितं केषाञ्चित् यजुषा वत्सानपाकरोति पवित्रवति गां दोहयतीति तस्यैव निषेधोऽयम् अयजुषा वत्सानपाकरोति अपवित्रवति गां दोहयतीति नवमाध्याये सिद्धान्तितं, तथाऽत्रापीत्यवगन्तव्यम्। तथा च जैमिनिसूत्रम्। विहितप्रतिषेधोवा इति।

यत्तु, शास्त्राद्रागाद्वा योषितां पृथग्दानाप्राप्तेरिति शूलपाणिवाचस्पतिमिश्रादिभिरुक्तं, तदुक्तवचनजातानवलोकनेन। न चैवमवसानदिनादृते इत्यनर्थकमिति वाच्यम्। तस्य प्रतिषिद्धपरिचायकतयाऽवसानदिनादन्यत्र यत् पृथग्दानं तस्यैव प्रतिषेधार्थकत्वात् अनुवादवाक्यानामनुवाद्यपरिचयैकप्रयोजनत्वात्। अन्यथा-

ऽवसानदिनेऽपि निषेधापत्तेः। अतएव पृथक्पदमपि नानर्थकम्। अवसानदिनादृते इत्यस्यानुपादानेऽपि तदर्थस्य प्रकारान्तरेण सिषाधयिषिततयोद्देश्यस्य सुखावबोधार्थं तदुपादानस्य व्यर्थतादोषोद्भावनस्यानौचित्याच्च।

यच्च, छन्दोगेतरोऽवसानदिनेतरत्र वृद्ध्यादौ योषिद्भ्यः पृथक् श्राद्धायान्नं दद्यादवसानदिने तु छन्दोगाच्छन्दोगोभय एव योषिद्भ्यः पृथग्दद्यादित्यर्थात् सिद्धमिति तत्त्वकृदुक्तम्। तच्चिन्त्यम्। अवसानदिनादृते इत्यस्य वैयर्थ्यापत्त्या पक्षान्तरं प्रतिक्षिप्य तत्कार्यक्ष्यायावतारितेऽस्मिन्नपि पक्षे तद्वैयर्थ्यापत्तेस्तदवस्थत्वात्। तन्मते, ध्रुवाणि तु प्रकुर्व्वीत प्रमीताहनि सर्व्वदेति-छन्दोगपरिशिष्टेन, स्त्रीणामप्येवमेवैतदेकोद्दिष्टमुदाहृतम्। मृताहनि यथान्यायं नृणां यद्वद्दिहोदितमिति मार्कण्डेयपुराणीयेन चावसानदिने योषिच्छ्राद्धप्राप्तेरविशेषात्। यानि पञ्चदशाद्यानि अपुत्त्रस्येतराणि च। एकस्यैव तु कार्य्याणि अपुत्रायाश्च योषित इति छन्दोगपरिशिष्टवचनान्तराच्च। एतच्च, इतराणि एकोद्दिष्टविधानेनैव यानि प्राप्तानि प्रत्याब्दिकश्राद्धानि तान्येव दातव्यानीति स्वयमेवैवं व्याख्यातम्। तदनेन योषितोऽपि मृताहनि श्राद्धप्रज्ञापनान्मृताहश्राद्धे सुतरां छन्दोगकर्तृपर्य्युदासो न भविष्यतीति किमवसानदिनादृते इत्यनेन।

किञ्च छन्दोगकर्तृपर्य्युदासे छन्दोगपरिशिष्टस्य छन्दोगेतरकर्म्मविधायकत्वमश्लिष्टं भवेत्। किञ्च छन्दोगस्य वचनानुपात्तत्वेन कथं तत्पर्य्युदासः। न च छन्दोगपरिशिष्टीयत्वेन प्रकरणलभ्यश्छन्दोगः कर्त्ता पर्य्युदस्यते इति वाच्यम्। प्रकरणलभ्यस्याशाब्दत्वेन शाब्दाशाब्दयोरन्वयानुपपत्तेः। शाब्दी ह्याकाङ्क्षा

शब्देनैव पूर्य्यते इति भाट्टसिद्धान्तात् । इत्थं पदजन्यपदार्थोपस्थितिं विना नान्वयबोध इति न्यायसिद्धान्ताच्च। पदजन्यपदार्थोपस्थितिं विनाऽप्यन्वयबोधाभ्युपगमे प्रत्यक्षाद्युपस्थितेनाप्यन्वयापत्तेः । शाब्दमतौ पदज्ञानस्य कारणत्वव्यभिचारापत्तेश्च । न चाध्याहृतच्छन्दोगपदार्थस्य पर्य्युदास इति वाच्यम् । अध्याहारकल्पनायां प्रमाणाभावात् । वाक्यार्थस्यान्यथैवोपपत्तेः । अच्छन्दोगपदाध्याहारेण तत्पर्य्युदासेन च्छन्दोगस्याप्युपदेशसम्भवाच्च । तस्मादिच्छितप्रतिषेधएवायमित्यादरणीयम् । अतएव पूर्व्वलिखितचतुर्विंशतिमतवाक्येऽपि च्छन्दोगपरिशिष्टवदेवोक्तमिति सुधीभिर्भाव्यम् ।

छन्दोगपरिशिष्टम् । विवाहादिः कर्म्मगणोय उक्तो गर्भाधानं शुश्रुम यस्य चान्ते । विवाहादावेकमेवात्र कुर्य्यात् श्राद्धं नादौ कर्म्मणः कर्म्मणः स्यात् । विवाहः पाणिग्रहणं, ततः परमुत्तरविवाहः समशनीयचरुशेषप्रतिपत्तिं यावत् । समशनीयचरुप्राशनमभिधाय, भुक्तोच्छिष्टं वध्वै प्रदाय यथार्थमिति सूत्रे यथार्थमित्यनेन कर्म्मापवर्गं सूचयित्वा गौर्दक्षिणेति तत्परसूत्रेण दक्षिणाऽभिधानात् । यत्तु, पत्यभिवादनान्तएव च्छन्दोगानां विवाहः, तावुभौ तत्प्रभृति त्रिरात्रमक्षारलवणाशिनौ ब्रह्मचारिणौ भूमौ सह शयीयातामिति तत्परसूत्रे तत्प्रभृति विवाहकर्म्मण ऊर्द्धमिति भट्टनारायणव्याख्यानदर्शनादिति तत्त्वकृद्भिरुक्तम् । तच्चिन्त्यम् । पूर्व्वोक्तयुक्तेः । किञ्च पाणिग्रहणेन विवाहस्य वृत्तत्वात्तदारभ्य दम्पत्योरमी नियमा न तूत्तरविवाहात् प्रभृति न खल्वपि पत्यभिवादनात् । तथासत्येतदोनिर्द्देशापत्तेः । तस्मादिप्रकृष्टस्य विवाहकर्म्मणः परामर्शार्थं तदो-

निर्देशः। एवञ्च यदि कुतश्चिदन्तरायाद्विवाहदिने प्रत्यभिवादनान्तं न क्रियते तथापि तत एवारभ्य ब्रह्मचर्य्यादिनियमा भवन्ति। ततश्च भट्टनारायणव्याख्यानादपि न प्रत्यभिवादनान्तत्वं विवाहस्य शक्यमवगन्तुम्।

विवाहादिरित्यादिपदेनोत्तरविवाहस्य यानारोहणस्य चतुष्पथाद्यामन्त्रणस्य सत्यञ्चभङ्गादौ तत्समाधानकर्म्मणो गृहप्रवेशस्यानडुच्चर्म्मोपवेशनादेर्धृतिहोमस्य चतुर्थीहोमस्य च ग्रहणम्। अत्र चतुर्थीहोमस्य विवाहाङ्गेदप्रतीतिः पूर्व्वलिखितकृत्यचिन्तामणिवचने तस्य विवाहभेदत्ववचनं छन्दोगव्यतिरिक्तविषयं बोद्धव्यम्। एषु विवादिचतुर्थीहोमान्तकर्म्मस्वेकमेव वृद्धिश्राद्धं कर्त्तव्यम्। अत्रच, नाष्टकासु भवेत् श्राद्धमितिवदुत्तरविवाहादिषु श्राद्धस्यानिषिद्धत्वात्, न तत्पूर्वं यतः प्रोक्तः सपिण्डनविधिः क्वचित्। वृद्धिश्राद्धस्य लोपः स्यादुभयोरपि पक्षयोरिति लिङ्गदर्शनात्, अत्र विवाहादिकर्म्मगणे एकमेव श्राद्धं कुर्य्यादित्युपदेशाच्च, गणशः क्रियमाणे तु मातृभ्यः पूजनं सकृत्। सकृदेव भवेत् श्राद्धमादौ न पृथगादिषु इतिवत् कर्मगणमुद्दिश्य विवाहादावेकं श्राद्धं करणीयम्।

न चाक्षभङ्गादिनिमित्तकर्म्मोद्दिश्यापि श्राद्धकरणे पश्चादक्षभङ्गादावजाते तन्निमित्तकर्म्मणोऽकरणादारब्धाकरणे प्रत्यवायापत्तिरतोविवाहार्थकृतश्राद्धेनोत्तरेषां श्राद्धवत्त्वमात्रं न तु कर्म्मगणमुद्दिश्य श्राद्धमिति वाच्यम्। विवाहार्थकृतश्राद्धेनोत्तरेषां श्राद्धवत्त्वमात्रे प्रमाणाभावात्। विवाहार्थकृतश्राद्धेनोत्तरेषां श्राद्धवत्त्वे तेषामपि तदुद्देश्यत्वावश्यकत्वात्। अन्योद्देशकृतश्राद्धेनान्यस्य श्राद्धवत्त्वानुपपत्तेः। पूर्व्वोक्तरीत्या कर्म्मगणोद्देशेन श्राद्धकरणोपदेशात्।

सत्येवाचभङ्गादौ तन्निमित्तकर्मणोगणान्तर्गततया तादृप्येणो-वोद्देश्यत्वसम्भवाच । न ह्यसत्यचभङ्गादौ तन्निमित्तकर्मणः श्राद्ध-वत्त्वमिति भवानपि वक्तुमुत्सहते । एवञ्च वृद्धिश्राद्धानन्तरमशौचे यथा विवाहः करणीयस्तथोत्तरविवाहादिकमपि करणीयं भवत्य-विशेषात् । तस्मान्नान्दीश्राद्धं विवाहादाविति सामान्यतोऽभिधाना-देकमेव श्राद्धं कर्म्मगणस्यारम्भकमित्यादरणीयम् ।

तस्यान्ते सावित्रश्चरुरिति गोभिलोक्तवद्गर्भाधानं शुश्रुम यस्य चान्ते इत्यन्तशब्दोऽवसानार्थः । विवाहादिरित्युक्ते न ज्ञायते कियान् कर्मगणोऽत्राभिप्रेत इति, यस्यावसाने गर्भा-धानं श्रूयते इत्युक्ते तु गर्भाधानात् प्राचीनः कर्मकलापोऽत्राभि-प्रेयते इति शक्यमवगन्तुम् । यस्य चेति चशब्देन गर्भा-धानस्य गणाद्व्यवच्छित्त्यवगतेः, शुश्रुमेति वचनभङ्ग्याऽपि तथा-ऽवगतेः, निषेककाले सोमे च सीमन्तोन्नयने तथा । ज्ञेयं पुंसवने चैव श्राद्धं कर्म्माङ्गमेव चेति भविष्यपुराणेन गर्भाधाने श्राद्धविधानाच्च, गर्भाधानं न कर्मगणान्तर्गतमित्यवसीयते । न चैतत् श्राद्धविधानं छन्दोगेतरपरमिति वाच्यम् । यतो-गर्भाधानस्य कर्मगणान्तर्भूतत्वे सत्येतदेवं स्यात्, सिद्धे च तथात्वे गर्भाधानस्य गणान्तर्भूतत्वमित्यन्योन्याश्रयापत्तेः । स्मृत्यर्थसन्देहे स्मृत्यन्तरसंवादवशेनार्थनिर्णयस्य तेषामप्यनुमतत्वाच्च ।

न चैवं प्रत्यृतु गर्भाधानस्य कर्त्तव्यतया सर्व्वत्रैव वृद्धिश्राद्धं स्यादिति वाच्यम् । असकृद्यानि कर्माणि क्रियेरन् कर्मकारिणा । प्रतिप्रयोगं नैव स्युर्मातरः श्राद्धमेव चेति छन्दोगपरिशिष्टेन दर्शपौर्णमासादिवत् प्रथमप्रयोगएव तद्विधानात् । जन्मन्यथोप-नयने विवाहे पुत्रकन्ययोः । पितॄन्नान्दीमुखान्नाम तर्पयेद्विधि-

पूर्व्वकम्। वेदव्रतेषु चाधानयज्ञपुंसवनेषु च। नवान्नभोजने स्नाने ऊढ़ायाः प्रथमार्त्तवे। देवारामतड़ागादिप्रतिष्ठासूत्सवेषु चेति पृथ्वीचन्द्रोदयधृतब्रह्मपुराणाच्च। स्नानं समावर्त्तनम्। उत्सवः पुत्रजन्मादिः।

मात्रादिनवदैवतवृद्धिश्राद्धस्य कालभेदमाह मदनपारिजाते गार्ग्यः। मातृश्राद्धन्तु पूर्व्वेद्युः कर्म्माहनि च पैतृकम्। मातामहं चोत्तरेद्युर्वृद्धौ श्राद्धत्रयं स्मृतम्। अत्रार्थे वृद्धशातातपः। पूर्वाह्णे मातृकं श्राद्धं मध्याह्ने पैतृकं तथा। ततो मातामहानाञ्च वृद्धौ श्राद्धत्रयं स्मृतम्। अनेनैकस्मिन्नेव दिने कालभेदेन श्राद्धत्रयं कर्त्तव्यमित्युक्तम्। तथा तस्यैव। पृथग्दिनेष्वशक्तश्चेदेकस्मिन् पूर्व्ववासरे। श्राद्धत्रयं प्रकुर्वीत वैश्वदेवन्तु तान्त्रिकम्। द्वितीयचरणे, कर्मणः पूर्व्ववासरे इति मदनपारिजाते पाठः। अत्र वैश्वदेवस्य तन्त्रत्वाभिधानादेकस्मिन्नेव काले श्राद्धत्रयं कर्त्तव्यमिति प्रतीयते। सुमन्तुः। अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधः। पूर्व्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्वकम्। यत्तु, पार्वणं चापराह्णे स्यात् प्रातर्वृद्धिनिमित्तकमिति शातातपवचनम्। तत्र प्रातःशब्दः सार्द्धप्रहरपरः। प्रहरोऽप्यर्द्धसंयुक्तः प्रातरित्यभिधीयते इति गार्ग्योक्तेरिति पृथ्वीचन्द्रोदयः। गोभिलपरिशिष्टेऽपि। पूर्वाह्णः प्रहरं सार्द्धं मध्याह्नः प्रहरं ततः। आ तृतीयादपराह्णः सायाह्नश्च ततः परम्। गोभिलस्येदमिति माधवाचार्य्याः। आभ्युदयिकमुपक्रम्याश्वलायनगृह्यपरिशिष्टम्। महत्सु पूर्वेद्युस्तदहरल्पेषु। स्मृत्यन्तरम्। एकविंशत्यहर्यज्ञे विवाहे दश वासराः। त्रिषट्चौलोपनयने नान्दीश्राद्धं विधीयते। एवञ्चाशौचसम्भावनायामेतावति पूर्वसमयेऽपि नान्दीश्राद्धं कर्त्तव्यमिति प्रयोगरत्नमयूखप्रभृतयः।

लघुविष्णुः । व्रतयज्ञविवाहेषु श्राद्धे होमार्च्चने जपे । आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् । आरम्भोवरणं यज्ञे संकल्पो-व्रतजापयोः । नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया । निमन्त्रणन्तु वा श्राद्धे आरम्भः स्यादिति स्मृतिः । वरणात् परमृत्विजामशौचाभावः । गृहीतमधुपर्कस्य यजमानात्तु-ऋत्विज इति ब्राह्मणात् । वरणाङ्गतया किल मधुपर्कः कल्प-सूत्रादौ विहितः । होमार्च्चनयोरपि सङ्कल्पएवारम्भः, व्रतजप-सन्दंशपतितत्वात् । पाकश्राद्धे पाकपरिक्रिया निमन्त्रणं वा आरम्भः । अन्यत्र तु निमन्त्रणमेव । यत्तु, पाकपरिक्रियेति सान्नेदर्शश्राद्धविषयं तत्र तस्य तदुद्धरणस्यासाधारणाङ्गत्वादिति तत्त्वकृद्भिरुक्तम् । तच्चिन्त्यम् । प्रमाणाभावात् । अन्यत्रापि पाकस्यासाधारणाङ्गत्वसम्भवाच्च । तस्माद्वाचनिकी व्यवस्था यथा-वचनमेव वर्णयितव्या । नात्र स्वमनीषिकया किञ्चिदुत्प्रेक्षि-तव्यम् ।

नाशौचमित्यधिकृत्य विष्णुः । न देवप्रतिष्ठाविवाहयोः पूर्व्व-सम्भृतयोः । पूर्वमाहृतसम्भारयोर्न त्वारब्धयोरशब्दत्वात् । आरम्भा-भावेऽप्याहृतसम्भारयोर्देवप्रतिष्ठाविवाहयोराशौचं न भवति । लग्नान्तराभावे इदमिति निर्णयसिन्धुः । स्मृत्यन्तरम् । यज्ञे सम्भृतसम्भारे विवाहे श्राद्धकर्म्मणि । सद्यः शौचमत्र प्रकृतमिति मिताक्षरा । मदनपारिजातादिषु विष्णुः । अनारब्धविशुद्ध्यर्थं कुष्माण्डैर्जुहुयाद्घृतम् । गां दद्यात् पञ्चगव्याशी ततः शुध्यति सूतकी । कुष्माण्डैः कुष्माण्डमन्त्रैः । ते च मन्त्रा यद्देवा-देवहेलनमित्यादयस्तैत्तिरीयारण्यके पठिताः । आरम्भाभावे-ऽपि अन्याय। अधार्थ्यत्वे सन्निहितलग्नान्तराभावे चेयमभ्यनुज्ञेति

मदनपारिजातः । वस्तुतस्तु, तन्मात्रपरत्वे प्रमाणाभावादन्यत्रापीयमभ्यनुज्ञोपतिष्ठते। तथा च निर्णयसिन्धौ स्मृतिः । सङ्कटे समनुप्राप्ते सूतके समुपागते । कुष्माण्डीभिर्घृतं हुत्वा गां च दद्यात् पयस्विनीम् । चूड़ोपनयनोद्वाहप्रतिष्ठादिकमाचरेत् । यदैव सूतकप्राप्तिस्तदैवाभ्युदयक्रिया । तदैवाभ्युदयक्रिया, न पुनः सूतके कथमभ्युदयक्रियेत्याशङ्कितव्यमिति तात्पर्य्यम् ।

भवदेवनिबन्धे स्मृतिः । व्रतोत्सवविवाहेषु तत्क्षणं मृतसूतके । अश्रुतवत्तथा तेन कर्त्तव्यं सर्वकर्म्म च । अश्रुतवदिति यथाऽविज्ञाते न दोषस्तथाऽत्रापीत्यर्थः । ब्रह्मपुराणम् । अथ देवप्रतिष्ठायां गणयागादिकर्मणि । श्राद्धादौ पितृयज्ञे च कन्यादाने च नो भवेत् । अशौचमित्यनुवर्त्तते वाक्यान्तरीयम् । प्रयोगपरिजाते वृहस्पतिः । कन्याविवाहे संक्रान्तौ सूतकं न कदाचन ।

तदेवमारब्धे तावद्विवाहे न भवत्येवाशौचप्रतिबन्धः । अनारब्धेऽपि सम्भृतसम्भारे तथैवेति । कस्याञ्चित् पुनरवस्थायामसम्भृतसम्भारेऽपि नाशौचं प्रतिबन्धकं भवति । सामान्यत एव विवाहादितत्तत्कर्मस्वशौचाभावोक्तेः । किन्त्वारम्भाभावेऽनारब्धविशुद्ध्यर्थं कुष्माण्डहोमादिकं करणीयम् । अतएवारम्भपक्षे भूयानादरो मुनीनाम् । शास्त्रैकशरणैः खल्वेवंविधे विषये निःशङ्कमेव यथाशास्त्रं प्रवर्त्तितव्यम् । नैव त्वयथाऽऽस्तिक्यातिशयबुद्ध्या वाक्यानामर्थान्तरकल्पना कर्त्तव्या । शास्त्रार्थवैरूप्यापत्तेः । अतएव व्यासः । वेदार्थो यः समाख्यातस्तत्राज्ञानं भवेद्यदि । ऋषिभिर्निश्चिते तत्र का शङ्का स्यान्मनीषिणाम् ।

वृहस्पतिः । विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके । परैरन्नं प्रदातव्यं भोक्तव्यञ्च द्विजोत्तमैः । भुञ्जानेषु तु विप्रेषु त्वन्तरा मृतसूतके ।

अन्यगेहोदकाचान्ताः सर्व्वे ते शुचयः स्मृताः। परैरसूतकिभिः परिवेशयितव्यमित्यर्थः। एतच्च पूर्व्वसङ्कल्पितद्रव्यविषयम्। विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके। पूर्व्वसङ्कल्पितान्नेषु न दोषः परिकीर्त्तित इति तेनैवोक्तेः। एवञ्च, विवाहयज्ञयोर्मध्ये सूतके सति चान्तरा। शेषमन्नं परैर्दद्यात् दातॄन् भोक्तॄंश्च न स्पृशेदिति हारलतालिखितस्मृत्यन्तरमपि पूर्वसङ्कल्पितान्नविषयमेव पर्य्यवस्यति। अर्थाद्वाहस्यत्यं परवचनमसङ्कल्पितान्नविषयमुपतिष्ठते। शेषमवशिष्टमन्नं परैर्दद्यात् परिवेशयेत् सूतकी तु दातॄन् भोक्तॄंश्च न स्पृशेदित्यर्थः। प्रपञ्चस्तु शुद्धिचन्द्रालोकेऽनुसन्धेयः।

अथ कन्यादानम्। तत्र वरस्य वरणमाह चण्डेश्वरः। उपवीतं फलं पुष्पं वासांसि विविधानि च। देयं वराय वरणे कन्या भ्रात्रा द्विजेन वा। अपरार्के कश्यपः। अहतं यन्त्रनिर्मुक्तं वासः प्रोक्तं स्वयम्भुवा। शस्तं तन्माङ्गलिक्येषु तावत्कालं न सर्व्वदा। यन्त्रनिर्मुक्तं नूतनम्। अहतं प्रोक्तमिति संबन्धः। ज्योतिषे। अभ्यङ्गे सूतके चैव विवाहे पुत्त्रजन्मनि। माङ्गल्येषु च सर्वेषु न धार्य्यं गोपिचन्दनम्। मात्स्ये। गोरोचनं सगोमूत्रं शुष्कं गोशकृतं तथा। दधिचन्दनसंमिश्रं ललाटे तिलकं न्यसेत्। सौभाग्यारोग्यकृद्रूपस्मात् सदा च ललिताप्रियम्। ललिता परमेश्वरी।

दानधर्म्मे। सर्वत्र प्राङ्मुखो दाता ग्रहीता च उदङ्मुखः। एष दाने विधिर्दृष्टो विवाहे तु व्यतिक्रमः। व्यतिक्रम इति ग्रहीता प्राङ्मुखो दाता चोदङ्मुखइत्यर्थः। शिष्टानामाचारश्चैवमेव स्मर्य्यते। यथा पार्वत्या विवाहे। उपविष्टस्त्रिनेत्रस्तु प्राचीं दिशमुदैक्षत। सप्तर्षिसेवितामाशां शैलेन्द्रोऽप्यवलोकयत्। सप्तर्षिसेवितामाशामुत्तरां दिशम्। अवलोकयदित्यड़भावश्छान्दसः। तथा

प्रभावतीविवाहे। जयन्तं प्राङ्मुखं कृत्वा विश्वकर्मा ह्युदङ्मुखः। कन्यां प्रत्यङ्मुखीं कृत्वा सालङ्कारां प्रभावतीम्। प्रभावत्याः करं कृत्वा जयन्तस्य करोपरीत्यादि।

यच्च, व्यतिक्रम इति प्रत्यङ्मुखः सम्प्रदाता प्रतिग्रहीता प्राङ्मुख इत्याचार्य्यचूड़ामणिव्याख्यानं तत्त्वकृद्भिर्लिखितम्। तच्चिन्त्यम्। व्यतिक्रमस्य क्रमविपर्य्ययरूपत्वेन दातृग्रहीत्रोरुपदिष्टधर्म्मपरिवृत्तिरूपतया पर्य्यवसानाद् व्यतिक्रमपदात्तथाऽनवगतेः। तथाचान्यत्र दातुर्यो धर्मः पूर्वदिङ्मुखत्वं स खलु विवाहे ग्रहीतुरेवमन्यत्र ग्रहीतुर्यो धर्म उदङ्मुखत्वं स इह दातुरित्ययमेव तस्य वचनस्यार्थः। दातृग्रहीत्रोरुपदिष्टधर्मवैपरीत्यस्य व्यतिक्रमरूपत्वे त्वभिप्रेयमाणे दातुः प्राङ्मुखत्ववैपरीत्येन प्रत्यङ्मुखत्ववत् ग्रहीतुरुदङ्मुखत्ववैपरीत्येन दक्षिणामुखत्वापत्तेः। न चेष्टापत्तिः, केनापि तथाऽनभ्युपगमात्। भवतामपसिद्धान्तापत्तेः। पूर्व्वोपदर्शितशिष्टाचारविरोधात्। कन्यां वरयमाणानामेष धर्मो विधीयते। प्रत्यङ्मुखा वरयन्ति प्रतिगृह्णन्ति प्राङ्मुखा इति कल्पतरुरत्नाकरविवाहतत्त्वार्णवोद्वाहतत्त्वादिलिखितग्रन्थपरिशिष्टविरोधापत्तेश्च।

विवाहात् पूर्व्वं विवाहकर्त्तृपक्षाणां कन्यावरणं विहितम्। ये किल कन्यां वरयन्ति, तेषामयं धर्म्मो यत् प्रत्यङ्मुखाः सन्तः कन्यां वरयन्ति। प्रतिग्रहीतारस्तु प्राङ्मुखाः सन्तः कन्यां प्रतिगृह्णन्ति। वरणे प्रतिग्रहाभावात् प्रतिग्रहीतुर्धर्मः प्राङ्मुखत्वं प्रसङ्गादुक्तः। न तु वरणप्रतिग्रहयोः कोऽप्यभिसंबन्धोऽस्ति। अभिसंबन्धे वा, कन्यावरणे प्राङ्मुख्याः कन्यायाः करे फलदानोपदेशात्तत्प्रतिग्रहपरतया स वर्णनीयः। प्राङ्मुखा इति टापस्त्वापत्वादुपपत्तिः

कर्त्तव्या। पृथक्तया प्रतिग्रहीतुर्धर्मोपदेश एव तु समीचीनः प्रतिभाति। एकवचनेनोपक्रान्ताया बहुवचनेनोपादानस्याश्लिष्टत्वात्।

तथा च सांख्यायनगृह्यम्। प्रत्यङ्मुखा आवहमाना-गोत्रनामाद्यनुकीर्त्तयन्तः कन्यां वरयन्ति। आश्वलायनगृह्यपरिशिष्टम्। अथकन्यावरणं कन्यां परिणेष्यमाणो द्वौ चत्वारोऽष्टौ-वरपितुरामान् प्रशस्ताकारकर्मणोऽनृचरा ऋजवः सन्तु प्रन्या-इति प्रहिणुहात्। ते तावतीभिः पुरन्ध्रीभिः सहिता मङ्गल-गीततूर्य्याभिरां कन्यागृहमेत्य शुभे पीठासने प्राङ्मुखासीनाया-दातृज्ञातिबान्धवोपेतायाः कन्यायाः पाणौ फलं प्रदाय कन्यावरण-कान्ते तृणीरन्नासीनाः प्रत्यङ्मुखा वशिष्ठगोत्रोद्भवायामुष्य प्रपौत्रायामुष्य पौत्रायामुष्य पुत्राय श्रुतशीलनाम्ने वराय वत्सगोत्रोद्भवाममुष्य प्रपौत्रीममुष्य पौत्रीममुष्य पुत्रीं सुशीलानाम्नीमिमां कन्यां भार्य्यात्वाय वृणीमहे इति ब्रूयुरित्यादि।

यत्र, वरयन्ति गोत्रप्रवराभिधानपूर्व्वकं ददति प्रतिगृह्णन्तीति श्रवणादिति विवाहतत्त्वार्णवोद्वाहतत्त्वयोर्व्याख्यातम्। तदुक्त-सांख्यायनगृह्याद्यनवलोकनेन। कन्यां वरयमाणानामित्युपक्रमोऽपि तद्व्याख्यायां नोपपद्यते। वृणोतेर्दानार्थतायां लक्षणा च स्यात्। विवाहतत्त्वार्णवे तु, वरयन्तीति गृह्यपरिशिष्टीयं तथा व्याख्याय, एवञ्च, प्राङ्मुखायाभिरूपाय वराय शुचिसन्निधौ। दद्यात् प्रत्यङ्मुखोदाता कन्यकां समलङ्कृतामिति महाजनपरिगृहीतपुराणवचनमपि न निर्मूलमित्युक्तम्। एतेनैतदवसीयते, यत्-प्राङ्मुखायेत्यादि लोकपरिपठितवाक्यस्य निर्मूलत्वशङ्का प्रचर-द्रूपैवासीत् गृह्यपरिशिष्टीयसंवादेन तु तस्य समूलत्वं परिचिकल्प-

यिषितम्। तच्चेत् गृह्यपरिशिष्टीयं प्रबलप्रमाणान्तरानुसारेणान्यपरं निर्णीतं परिकल्पितस्यार्थान्तरं निरालम्बनत्वात् प्रबलद्रूपं, तदा कैव प्रत्याशा तद्वाक्यस्य समूलतायां तन्निबन्धनस्य च दातुः प्रत्यङ्मुखत्वस्य। अनपायिनि संश्रयद्रुमे गजभग्ने पतनाय वल्लरीति न्यायापातात्। प्रत्यङ्मुखोमिति श्लोकपाठः प्रमादादिना प्रत्यङ्मुखइत्यन्यथा भूत इति तु प्रतिभाति। तस्य समूलत्वे तु विकल्पएव मन्तव्यः। केचित्तु शुचिसन्निधावित्युक्तः साग्निपरं तदिति वदन्ति। पठन्ति च। निरग्निकः सम्प्रदाता कन्यां दद्यादुदङ्मुख इति। सर्व्वथाऽपि सन्दिग्धमूलवाक्यावष्टम्भेन निश्चितमूलदानधर्म्मवाक्यस्यान्यथावर्णनमनुचितमेव। चतुर्वर्गचिन्तामणौ मदनरत्नप्रदीपे च ऋष्यशृङ्गः। तिष्ठेत् पूर्वमुखो दाता वरः प्रत्यङ्मुखो भवेत्। मधुपर्कार्च्चितायैनां तस्मै दद्यात् सदक्षिणाम्। अत्रापि विकल्पएव प्रवर्त्तते।

मधुपर्कोगृह्योक्तकर्म्मविशेषोऽर्घ्यमर्हणमिति चोच्यते। मधुपर्के विशेषमाह गृह्यपरिशिष्टम्। वरस्य या भवेच्छाखा तच्छाखागृह्यचोदितः। मधुपर्कः प्रदातव्योह्यन्यशाखेऽपि दातरि। अतएवार्च्यशाखया मधुपर्क इत्याहुः। यजमानशाखया मधुपर्क इति केचित्। वृद्धास्त्वर्च्यशाखयैवाद्रियन्ते। गौड़ास्तु अर्च्चकस्यार्च्यस्य च स्वस्वकृत्यं स्वस्वशाखोक्तप्रकारेण कुर्वन्ति।

मत्स्यपुराणे। तुलापुरुषदाने च तथैव हाटकाचले। कन्यादाने तयोत्सर्गे कीर्त्तयेत् प्रवरादिकम्। दाने वाग्दाने। उत्सर्गे सम्प्रदाने। प्रवरादिकमित्यादिपदात् गोत्रादिपरिग्रहः। ऋष्यशृङ्गः। वरगोत्रं समुच्चार्य्य प्रपितामहपूर्वकम्। नाम सङ्कीर्त्तयेद्विद्वान् कन्यायाश्चैवमेव हि। आदौ वरस्य गोत्रमुच्चार्य्य प्रपिता-

महपूर्वकं वरस्य नामोच्चारयेत् । एवम् आदौ कन्याया-गोत्रमुच्चार्य्य प्रपितामहपूर्वकं कन्याया नामोच्चारयेदित्यर्थः । धनञ्जयकृतसंबन्धविवेके परिशिष्टीयम् । नान्दीमुखे विवाहे च प्रपितामहपूर्व्वकम् । वाक्यमुच्चारयेद्विद्वानन्यत्र पितृपूर्वकम् । एतदेव त्रिरुच्चार्य्य कन्यां दद्यात् यथाविधि । वृद्धवशिष्ठस्येद-मिति हेमाद्रिः । नान्दीमुखे प्रपितामहपूर्वकत्वं छन्दोगादिव्यति-रिक्तविषयं, तेषां स्वशास्त्रे पितृपूर्वकत्वोक्तेः । अन्यत्र पार्वणादौ । एतदिति वाक्यम् । अनयोर्मते प्रवरोल्लेखोनास्ति, अनुपदेशात् । अतएव वक्ष्यमाणाश्वलायनगृह्यपरिशिष्टेऽपि प्रवरोल्लेखो नाभि-हितः । ऋष्यशृङ्गवचने वरगोत्रं समुच्चार्य्येत्यभिधानात् वरस्यैव गोत्रोल्लेखो न तु तत्प्रपितामहादीनामपीति बोध्यम् । कन्या-पक्षेऽप्येवम् । अतएव वक्ष्यमाणाश्वलायनगृह्यपरिशिष्टे वरस्यैव गोत्रोल्लेखो दर्शितः, न तस्य प्रपितामहादीनाम् । न खल्वपि कन्यायाः ।

पूर्व्वोक्तपरिशिष्टीये एतदेव त्रिरुच्चार्य्येत्यवधारणात् वाक्यमेव त्रिरुच्चारणीयम् । न च ऋष्यशृङ्गवचनात् कन्यानामान्तमेव त्रिरुच्चारणीयं न समस्तं वाक्यमिति तत्त्वकारव्याख्यानं युक्त-मिति वाच्यम् । ऋष्यशृङ्गवचने वरकन्ययोः प्रपितामहपूर्वक-नामोच्चारणमात्रोपदेशेन त्रिरुच्चारणस्य च तत्रानुक्तेः परिविष्टीये च वाक्यस्य त्रिरुच्चारणोपदेशेनानयोर्विभिन्नार्थतयैकस्यापरविशेषक-त्वासम्भवात् । यदप्युक्तं, सकृदंशोनिपतति सकृत् कन्या प्रदी-यते । सकृदाह ददानीति त्रीण्येतानि सकृत् सकृदिति मनु-वचनात् सम्प्रददे इत्यन्तं वाक्यं न त्रिरुच्चारणीयमिति । तदपि चिन्त्यम् । सम्प्रददे इत्यन्तवाक्यस्य त्रिरुच्चारणेऽपि कन्याप्रदानस्य

सकृत्त्वानपायात्। त्रिरुच्चार्य्य दद्यादिति वचनात् त्रिरुच्चारणात् परतएव दानावगतेः। ददानीत्यस्यानुमतिग्रहणवाक्यस्य सकृद्वचन-विधानेन दानवाक्यस्य त्रिरुच्चारणे बाधकाभावात्। सामान्यस्य विशेषेतरपरत्वोपपत्तेश्च। यच्चापरमुक्तं, अनुमतिग्रहण-प्रार्थनाद्यर्थत्वे सकृदभिधानमप्रयोजकमिति। तदपि चिन्त्यम्। वचनप्रामाण्यात् सकृदभिधानस्यैव प्रयोजकत्वात्। अन्यथा दानवाक्येऽपि तस्य प्रयोजकत्वं न स्यात्। लोकोलङ्घ्येऽननु-शिष्टत्वाच्च। तस्मादहणे विष्टरादेस्त्रिरुच्चारणवददृष्टार्थं समस्तमेव वाक्यं त्रिरुच्चारणीयमनन्यगतेर्वचनात्। अतएव यथाविध्यु-त्युक्तम्। अत्र खल्वयमेव विधिरिति। दानवाक्यस्य चादृष्टा-र्थत्वं निर्विवादमेव। अतएव कन्यावरणवाक्यानन्तरमाश्वलायन गृह्यपरिशिष्टे एवं त्रिः प्रयुञ्ज्यैत्युक्तम्।

तथा कन्यादानोपक्रमे तत्रैव। वत्सगोत्रोत्पन्नामसुष्य प्रपौत्री-ममुष्य पौत्रीममुष्य पुत्रीं सुशीलानाम्नीमिमां कन्यां वशिष्ठ गोत्रोद्भवायामुष्य प्रपौत्रायामुष्य पौत्रायामुष्य पुत्राय श्रुतशील-नाम्नेऽस्मै वराय सम्प्रददे इत्यादिना धर्म्मप्रजासिद्ध्यर्थं कन्यां प्रतिगृह्णामीति ब्रूयादित्यन्तेन ग्रन्थेन दानग्रहणपरिपाटीमभिधाय एवं त्रिः प्रयुञ्ज्यादित्यभिहितम्। सुमन्तुनाऽपि त्रींस्त्रीन् वारान् ब्रूयादित्युक्तम्। त्रींस्त्रीनिति वीप्सा दातृग्रहीत्रपेक्षया। निर्णय-सिन्धावपि मदनरत्ने हेमाद्रौ च ऋष्यशृङ्ग इत्युपक्रम्य, वरगोत्रं समुच्चार्य्येति तिष्ठेत् पूर्व्वमुखोदातेति वचनद्वयमभिधाय, उदपात्रं ततो-गृह्य मन्त्रेणानेन दापयेत्। गौरीं कन्यामिमां विप्र यथाशक्ति विभूषिताम्। गोत्राय शर्म्मणे तुभ्यं दत्तां विप्र समाश्रय। भूमिं गाश्चैव दासीं च वासांसि च स्वशक्तितः। महिषीं वाजिनश्चैव

ददयात् स्वर्णमणीनपि। ततः स्वगृह्यविधिना होमाद्यं कर्म्म कारयेत्। यथाचारं विधेयानि मङ्गलकौतुकानिच इत्यन्त-मृषयश्टङ्गवाक्यं लिखित्वा, एतत् कन्यादानं त्रिः कार्य्यमिति शौनकइत्युक्तम्।

आकरे दृष्टएव स्वाश्वलायनगृह्यपरिशिष्टपाठोऽस्माभिः प्रद-र्शितः। हरिशर्म्मणा स्वाश्वलायनगृह्यपरिशिष्टमिति कृत्वाऽन्यथा पठितम्। तद्यथा। शिवदत्तप्रपौत्री विष्णुदत्तपौत्री हरिदत्तपुत्री यज्ञदत्ता कन्या शिवमित्रप्रपौत्राय विष्णुमित्रपौत्राय राममित्र-पुत्राय रुद्रमित्राय तुभ्यं सम्प्रदत्तेति। तदेतदाकरे नोपलभ्यते परिशिष्टान्तरं वा स्यात्। सम्प्रदानात् परतस्त्वेवं पठितव्यं, सम्प्रदत्तेति निष्ठानिर्देशादिति प्रतिभाति।

यच्चोक्तं तत्त्वकारेण, आश्वलायनगृह्यपरिशिष्टीयपाठक्रमा-हृष्यश्टङ्गोक्तशाब्दक्रमस्य बलवत्त्वाद्वरकुलाभिधानानन्तरं कन्या-कुलाभिधानमिति। तच्चिन्त्यम्। परिशिष्टवाक्यस्य प्रयोगोपदेश-रूपतया तदन्यथाकरणानुपपत्तेः। ऋष्यश्टङ्गवचने वरस्य प्रपितामहपूर्व्वकनामोच्चारणे तद्गोत्रोच्चारणानन्तर्य्यमात्रस्योक्त-त्वेन वरकन्याकुलयोरुच्चारणक्रमस्य तत्र शब्दादनवगतेश्च। तस्मादुभयथैव शास्त्रार्थः प्रचरति, ऋष्यश्टङ्गाद्युक्तपाठक्रमाद्वर-कुलाभिधानानन्तरं वा कन्याकुलाभिधानं, आश्वलायनगृह्य-परिशिष्टीयप्रयोगवचनात् कन्याकुलाभिधानानन्तरं वा वरकुला-भिधानमिति। तत्राश्वलायनीयानां स्वशास्त्रोक्तएव क्रमो-ऽन्येषान्त्वन्यथाऽपीति।

सम्प्रदानवाक्ये तु सम्प्रददे इत्येव वक्तव्यं, तथैवाश्वलायनगृह्य-परिशिष्टे दर्शनात्। तथा च व्यासः। नामगोत्रे समुच्चार्य्य

प्रदद्यात् श्रद्धयाऽन्वितः। परितुष्टेन भावेन तुभ्यं सम्प्रददे इति। न तु ददामीत्युल्लेख्यं, तस्यानुमतिग्रहणार्थत्वेन दानवाक्ये तथोल्लेखे प्रमाणाभावात्। अर्थानन्वयात्। दानस्य वर्त्तमानतया लडन्तप्रयोगस्यैव युक्तत्वाच्च। तथा च पितृभक्तितरङ्गिण्यां स्मृतिः। इदं तुभ्यं ददामीति पात्रहस्ते जलं क्षिपेत्। ददस्वेति स तेनोक्तस्तुभ्यं सम्प्रददे इति। न चाहमस्मै ददामीति एवमाभाष्य दीयते इति छन्दोगपरिशिष्टदर्शनाद्ददामीत्यप्युल्लेख्यमिति वाच्यम्। तस्याप्यनुमतिग्रहणार्थत्वात्। एवं हि छन्दोगपरिशिष्टोपं पठ्यते। कुलर्त्विजमधीयानं सन्निकृष्टं तथा गुरुम्। नातिक्रमेत् सदा दित्सन् यइच्छेदात्मनोहितम्। अहमस्मै ददामीति एवमाभाष्य दीयते। नैतावपृष्ट्वा ददतः पात्रेऽपि फलमस्ति हि। दूरस्थाभ्यामपि द्वाभ्यां प्रदाय मनसा वरम्। इतरेभ्यस्ततो देयादेष दाने विधिः स्मृतः। दित्सुना सन्निकृष्टौ गुरुकुलर्त्विजौ नातिक्रमितव्यौ। यदा त्वशौचेन तयोः प्रतिग्रहस्यासम्भवस्तदाऽपि अहमस्मै ददामीति तौ पृष्ट्वा तयोरनुमतिं लब्ध्वा अन्यस्मै देयमिति व्यक्तमनुमतिग्रहणार्थत्वंतस्य।

एतेन, द्रव्यस्य नाम गृह्णीयात् ददामीति ततोवदेत्। तोयं दद्यात्तथा दाता दाने विधिरयं स्मृत इति विष्णुधर्म्मोत्तरीयमप्यनुमतिग्रहणार्थतया व्याख्यातम्। न चानुमतिग्रहणवाक्ये ददामीत्युल्लेखदर्शनात् दानवाक्येऽपि तथोल्लेख इति वाच्यम्। मानाभावात्। दानवाक्ये सम्प्रददे इत्यस्योल्लेखविधानेन तत्कल्पनाऽनुपपत्तेश्च। एतेनात्मगामिफले संप्रददे परगामिफले ददामीति उभयपदित्वाद्दातोरिति यदुक्तं, तदपि चिन्त्यम्। दानवाक्ये सम्प्रददे इत्युल्लेखस्यैव विहितत्वेन ददामीत्युल्लेखे मानाभावात्।

उभयपदित्वाद्दातोरित्यप्यसङ्गतं वचनम् । डु दाञ् दाने इत्यनेनैव दानवाक्यरचनेत्यत्र प्रमाणाभावात् । दद दाने इत्यात्मनेपदिनाऽपि तत्सम्भवात् । प्रत्युत वचनस्वरसात् दद दाने इत्यनेनैव वाक्यरचना करणीया भवति । तस्माद्वचनप्रामाण्यात् सर्वत्रैव सम्प्रददे इति प्रयोगः कर्त्तव्यः । भवदेवभट्टप्रभृतिभिरप्यात्मगामिफलपरगामिफलयोर्विशेषो नाभिहितः ।

पित्रादिगतफलोद्देशेनापि कन्या दीयते । रत्नवस्त्रमहीयानसर्वभोगादिकं वसु । विभवे सति विप्रेभ्यो योऽस्मानुद्दिश्य दास्यतीति विष्णुपुराणीयपितृगाथायां सामान्यतोऽभिधानात् । मत्स्यपुराणे । माङ्गल्यानि च वाद्यानि ब्रह्मघोषञ्च गीतकम् । ऋत्वर्थं कारयेद्विद्वानमङ्गलविनाशनम् । मत्स्यसूक्ते । वलिकर्म्मणि यात्रायां प्रवेशे नववेश्मनः । महोत्सवे च माङ्गल्ये तत्र स्त्रीणां ध्वनिः शुभः । ध्वनिरुलुलुध्वनिः । दाक्षिणात्यसंग्रहे । आसने शयने दाने भोजने वस्त्रसंग्रहे । विवादे च विवाहे च क्षुतं सप्तसु शोभनम् । विष्णुधर्म्मोत्तरे । नामसंकीर्त्तनं नित्यं क्षुतप्रस्खलितादिषु । वियोगं शीघ्रमाप्नोति सर्व्वानर्थो न संशयः । विष्णोरित्यनुवर्त्तते वाक्यान्तरीयम् ।

स्मृत्यर्थसारे व्यासः । भुक्त्वा समुद्वहेत् कन्यां सावित्रीग्रहणन्तथा । उपोषितः सुतां दद्यादर्च्चिताय वराय तु । भुक्त्वेति मधुपर्के * वैधभोजनपरमिति कमलाकरभट्टाः । मत्स्यसूक्तमिति कृत्वा पठन्ति । अशोककलिकापानं यज्ञे सोमलतारसम् । विवाहे मधुपर्कञ्च भुक्त्वा कर्म्म समाचरेत् । बौधायनस्त्वन्यदपि भोजनमनुजानाति । तथा च बौधायनगृह्यम् । विवाहं व्याख्यास्याम इत्युपक्रम्य, पुण्याहं स्वस्तिमृद्धिमित्योंकारपूर्व्वां स्तिस्त्रि-

केकामाग्निषो वाचयित्वा स्नातोऽहतवासा गन्धानुलिप्तः स्रग्वी भुक्तवान् प्रतोदपाणिरपदा गत्वा वधूज्ञातिभिरतिथिवदर्चितः स्नातामहतवाससं गन्धानुलिप्तां स्रग्विनीं भुक्तवतीमिषुहस्तां दत्तां वधूं समीक्षते।

अत्र, गोभिलेन पुण्ये नक्षत्रे दारान् कुर्व्वीतेत्यनेन सूत्रेण दारकरणं सूत्रयित्वा, कन्यालक्षणपरीक्षामभिधायासन्नविवाहायाः स्नपनरूपं ज्ञातिकर्म्मोक्त्वा, पाणिग्रहणे पुरस्ताच्छालाया अग्निरुप समाहितो भवतीति सूत्रेणाग्निस्थापनमभिधाय, अथ जन्यानामेको-ध्रुवाणामपां कलसं पूरयित्वेत्यादिना द्रव्यासादनं सूत्रयित्वा, अथ यस्याः पाणिं ग्रहीष्यन् भवति सशिरस्का साऽऽप्लुता भवतीत्यादिना स्नानं वासःपरिधापनञ्चाभिधाय, प्रावृतां यज्ञोपवीतिनीमभ्युदानयन् जपेदित्यनेन वध्वा अग्निसमीपनयनमभिधाय, परतो विवाहेतिकर्त्तव्यतायाः सूत्रणात्; पारस्करेण च उपलिप्ते उद्धृतावोक्षितेऽग्निमुपसमाधाय इत्यनेन सूत्रेणाग्निस्थापनमभिधाय, उदगयनआपूर्य्यमाणपक्षे पुण्याहे कुमार्य्याः पाणिं गृह्णीयात् इति पाणिग्रहणं कर्त्तव्यतया सूत्रयित्वा, अथैनां वासः परिधापयतीत्यनेन वासःपरिधापनमुक्त्वा, पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामयतीत्यभिधानात्, गोभिलीयानां पारस्करीयाणाञ्च दानात् पूर्व्वमग्निस्थापनं कर्त्तव्यम्।

यद्यपि गोभिलेन कन्यादानं नोक्तं, तथापि वासःपरिधापनानन्तरमग्निसमीपनयनाभिधानात् पारस्करेण च प्रत्ताया निष्क्रामणाभिधानात् वासःपरिधापनानन्तरमग्निसमीपनयनात् च पूर्व्वं पारस्करीयाणामिव गोभिलीयानामपि प्रदानं करणीयं भवति। उभयत्रैव तुल्यवदभिधानात्। यत्राम्नातं स्वशाखायां

परोक्षमविरोधि च। विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्म्मवदिति च्छन्दोगपरिशिष्टाच्च। यजुर्वेदशाखापठितं खल्वग्निहोत्रं छन्दोगैः क्रियते। दातुरेतत्कर्म्मेति ज्ञात्वा तु दारकणमुपदिदिक्षुर्गोभिलोन प्रदानं कन्यायाः सूत्रयाञ्चकार। शास्त्रान्तरोपदिष्टे त्ववसरे प्रदात्रा तत् करणीयम्। यतः कस्मिंश्चिदवसरे तेन तदवश्यं कर्त्तव्यम्। स चावसरः स्नानवासःपरिधानात् परतोऽग्निसमीपनयनाच्च पूर्वतएव समीचीनः।

तत्त्वकृतस्तु, यजुर्वेदिनां दानात् पूर्वमग्निस्थापनमाहुर्न च्छन्दोगानाम्। तच्चिन्त्यम्। पूर्वप्रदर्शितगोभिलसूत्रस्वरसात् छन्दोगानामपि तथात्वावगतेः। यजुर्वेदिनामिति सामान्यतोऽभिधानस्यानुचितम्। बौधायनगृह्ये दत्तां वधूं समीक्षते इत्यनेन दानमभिधायान्यदपि किञ्चित् कर्मोक्त्वा, अथैनां देवयजनमुदानयत्येकमिषे विष्णुस्त्वा नयतीत्यादिना सप्तपदीगमनादिपूर्वकं देवयजननयनमभिधाय, अथ शुचौ देशेऽग्न्यायतनदेशं शकलेन त्रिः प्राचीनमुल्लिखेत् त्रिरुदीचीनमित्यादिनाऽग्निस्थापनं सूत्रयित्वा पश्चाद्दैवाहिकहोमाभिधानात्।

निर्णयसिन्धौ बौधायनसूत्रम्। अथ यदि कन्योपसाद्यमाना वोह्यमाना वा रजस्वला स्यात्तामनुमन्त्रयेत् पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ पुमानिन्द्रश्च सूर्य्यश्च पुमांसं च दधात्वियमिति अथ द्वादशरात्रमलङ्कृत्य प्राशयेत् पञ्चगव्यमथ शुद्धां ज्ञात्वा विवहेत्। मदनपारिजाते यज्ञपार्श्वः। विवाहे वितते तन्त्रे होमकाले उपस्थिते। कन्याया ऋतुरागच्छेत् कथं कुर्वन्ति याज्ञिकाः। स्नापयित्वा तु तां कन्यामर्च्चयित्वा यथाविधि। युञ्जानामाहुतिं हुत्वा ततस्तन्त्रं प्रवर्त्तयेत्। इदयाज्ञवल्क्यस्येद-

मिति रत्नाकरः। हुत्वा चाज्याहुतीस्तत्रेति यज्ञपार्श्वपाठ इति तत्त्वज्ञतः। पशुपतिस्तु, हुत्वाऽऽज्यञ्चैव लाजांश्चेति पठित्वा मन्त्रानादेशे गायत्रीति वचनाद्गायत्र्या होम इत्याह। अनूपविलासे। विवाहहोमे प्रक्रान्ते यदि कन्या रजस्वला। त्रिरात्रं दम्पती स्यातां पृथक्शय्याऽऽसनस्थितौ। चतुर्थेऽहनि संस्नातौ तस्मिन्नग्नौ यथाविधि। विवाहहोमं कुर्य्यातामित्यादि स्मृतिसंग्रहः। तदेतैर्वचनैरुद्वाह्यमानाया ऋतौ आगते तामभिमन्त्र्य द्वादशरात्रं पञ्चगव्यं प्राश्य पश्चाद्विवहेत्। होमकाले उपस्थिते ऋतावागते स्नापनार्थं स्नात्वा युञ्जनाख्याहुतिं हुत्वा होमं कुर्य्यात्। विवाहहोमप्रारम्भात् परतस्तु ऋतावागते त्रिरात्रात् परतस्तस्मिन्नेवाग्नौ विवाहहोममाचरेदिति प्रचरति शास्त्रार्थः।

विवाहे रात्रौ दानान्तरमप्याह व्यासः। ग्रहणोद्वाहसंक्रान्तियात्राऽऽर्त्तिप्रसवेषु च। दानं नैमित्तिकं ज्ञेयं रात्रावपि न दुष्यति। विष्णुधर्म्मोत्तरे। विवाहादिक्रियाकाले तत्क्रियासिद्धिकारणम्। यः प्रयच्छति धर्म्मात्मा सोऽश्वमेधफलं लभेत्। दक्षः। मातापितृविहीनन्तु संस्कारोद्वाहनादिभिः। यः स्थापयति तस्येह पुण्यसंख्या न विद्यते।

गोभिलगृह्यम्। तावुभौ तत्प्रभृति त्रिरात्रमक्षारलवणाशिनौ ब्रह्मचारिणौ भूमौ सह शयीयाताम्। तत्प्रभृति विवाहकर्मारभ्य। क्षारं लवणञ्च यत्र भवति तदक्षारलवणं, तद्भुञ्जीयाताम्। आश्वलायनगृह्यम्। अक्षारालवणाशिनौ ब्रह्मचारिणावलंकुर्व्वाणावधःशायिनौ स्यातामतऊर्द्धं त्रिरात्रं द्वादशरात्रं संवत्सरं वैक ऋषिर्जायते इति। संवत्सरं वा ब्रह्मचारिणौ स्यातामित्येके आचार्य्या मन्यन्ते। एवं खल्वृषिः पुत्रो जायते इति ज्ञात्वा।

बौधायनगृह्यम् । ब्राह्मणेन ब्राह्मण्यामुत्पन्नः प्रागुपनयनाज्जात-इत्यभिधीयते, उपनीतमात्रो व्रतानुचारी वेदानां किञ्चिदधीत्य-ब्राह्मणः, एकां शाखामधीत्य श्रोत्रियोऽङ्गाध्याय्यनूचानः कल्पाध्याय्यृषिकल्पः सूत्रप्रवचनाध्यायी भ्रूणश्चतुर्वेदादृषिरत ऊर्द्धं देवो-ऽथ यदि कामयेत श्रोत्रियं जनयेयमित्यरुन्धत्युपस्थानात् कृत्वा व्रतमुपेयात् त्रिरात्रमक्षारालवणाशिनावधःशायिनौ ब्रह्मचारिणा-वासातेऽहतानाञ्च वाससां परीधानं सायं प्रातश्चालङ्करणमिषु-प्रतोदयोश्च धारणमग्निपरिचर्य्या चा चतुर्थ्याः पक्वहोमः उपसंवेशनं चाथ यदि कामयेतानूचानं जनयेयमिति द्वादशरात्रमेतद्व्रतं चरेत् व्रतान्ते पक्वहोम उपसंवेशनञ्चाथ यदि कामयेत ऋषिकल्पं जन-येयमिति मासमेतद्व्रतञ्चरेत् व्रतान्ते पक्वहोम उपसंवेशनञ्चाथ यदि कामयेत भ्रूणं जनयेयमिति चतुरो मासानेतद्व्रतं चरेत् व्रतान्ते पक्वहोम उपसंवेशनञ्चाथ यदि कामयेत ऋषिं जनयेय-मिति षण्मासानेतद्व्रतं चरेत् व्रतान्ते पक्वहोम उपसंवेशनञ्चाथ यदि कामयेत देवं जनयेयमिति संवत्सरमेतद्व्रतं चरेत् व्रतान्ते पक्व-होम उपसंवेशनञ्च ।

विवाहतत्त्वार्णवे ब्रह्मपुराणम् । कृते विवाहे वर्षन्तु वस्तव्यं ब्रह्मचारिणा । यद्यष्टवर्षा कन्या सा भवेत्तत्त्रिगुणः पुमान् । अथवा द्वादशाहानि त्रिंशद्वर्षेण सर्वदा । यदि द्वादशवर्षा स्यात् कन्या रूपगुणान्विता । द्वात्रिंशद्वर्षके पूर्णे यदि षोड़शवार्षिकी । लब्ध्वा तदन्ते स्नातव्यं षड्रात्रं संयतेन तु ! विंशत्यब्दा यदा कन्या स्नातव्यं तत्र वै त्र्यहम् । अतऊर्द्धमहोरात्रं स्नातव्यं संयतेन वै । गृह्याविरोधेनैतेषां कल्पानां व्यवस्थाऽनुसरणीया । मतभेद-पक्षेऽपि स्वशास्त्राविरोधेनैतदादरणीयम् ।

अथ वधूप्रवेशादि। नारदः। आरभ्योद्वाहदिवसात् षष्ठे वाऽप्यष्टमे दिने। वधूप्रवेशः संपत्त्यै दशमेऽथ समे दिने। बृहद्वशिष्ठः। षष्ठाष्टमे वा दशमे दिने वा विवाहमारभ्य वधूप्रवेशः। पञ्चाङ्ग-संशुद्धदिनं विनाऽपि विधावसन्तोचरगेऽपि कार्य्यः। संग्रहे। विवाहमारभ्य वधूप्रवेशो युग्मे तिथौ षोड़शवासरान्तः। ऊर्द्धं ततोऽब्देऽयुजि पञ्चमान्तात् अतः परस्तान्नियमो न चास्ति। षोड़शवासरादूर्द्धं पञ्चमाब्दपर्य्यन्तमयुग्मे वर्षे वधूप्रवेशः पञ्च-माब्दात् परतस्तु नियमोनास्ति। नारदः। समे वर्षे तथा मासे यदि नारी गृहं व्रजेत्। आयुषं हरते भर्त्तुः सा नारी मरणं व्रजेत्। गृहं पतिगृहम्। इदं षोड़शवासरादूर्द्धं पञ्चमाब्दपर्य्यन्तं बोध्यम्। एतेन, मार्गशीर्षे तथा माघे माधवे ज्यैष्ठसंज्ञके। सुप्रशस्ते भवेद्वेश्मप्रवेशो नवयोषिताम् इत्यपि व्याख्यातम्। माण्डव्यः। नित्ययानि गृहे जीर्णे प्राशनान्तेषु सप्तसु। वधूप्रवेशमाङ्गल्ये न मौढ्यं गुरुशुक्रयोः। प्राशनान्तेषु गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्म्म-नामकरणान्नप्राशनेषु। सावकाशेष्वप्येषु मौढ्यदोषो नास्तीत्यर्थः। ज्योतिःप्रकाशे। वामे शुक्रे नवोढ़ायाः सुखहानिश्च दक्षिणे। धनं धान्यञ्च पृष्ठस्थे सर्व्वनाशः पुरःस्थिते। नवोढ़ायास्तु वैधव्यं यदुक्तं सम्मुखे भृगौ। तदेव विबुधैर्ज्ञेयं केवलं तु द्विरागमे।

चतुर्वर्गचिन्तामणौ प्रायश्चित्तकाण्डे गालवः। विवाहकाले यात्रायां पथि चौरसमाकुले। असहायो भवेद्विप्रस्तदा कार्य्यो-द्विजन्मभिः। एकयानसमारोह एकपात्रे च भोजनम्। विवाहे पथि यात्रायां कृत्वा विप्रो न दोषभाक्। अन्यथा दोषमाप्नोति पश्चाच्चान्द्रायणं चरेत्। मत्स्यसूक्ते। भुक्त्वा पितृगृहे कन्या भुङ्क्ते स्वामिगृहे यदि। दौर्भाग्यं जायते तस्याः शपन्ति कुलनायिकाः।

निबन्धे। विवाहात् प्रथमे पौषे आषाढ़े चाधिमासके। न सा भर्त्तृगृहे तिष्ठेत् चैत्रे पितृगृहे तथा। ज्योतिर्निबन्धे। उद्वाहात् प्रथमे शुचौ यदि वसेद्भर्त्तुर्गृहे कन्यका हन्यात्तज्जननीं क्षये निज-तनुं ज्यैष्ठे पतिर्ज्येष्ठकम्। पौषे च श्वशुरं पतिञ्च मलिने चैत्रे स्वपित्रालये तिष्ठन्ती पितरं निहन्ति न भयं तेषामभावे भवेत्। क्षये क्षयमासे। मलिने मलिम्लुचे। तेषां भर्त्तृजननीप्रभृतीनाम्।

याज्ञवल्क्यः। भर्त्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः। बन्धुभिश्च स्त्रियः पूज्या भूषणाच्छादनाशनैः। मनुः। पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा। पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः। यत्र नार्य्यस्तु पूज्यन्ते रमन्ते तत्र देवताः। यत्रैतास्तु न पूज्यन्ते सर्व्वास्तत्राफलाः क्रियाः। शोचन्ति जामयो यत्र विनश्यत्याशु तत् कुलम्। न शोचन्ति तु यत्रैता वर्द्धते तद्धि सर्व्वदा। जामयो-यानि गेहानि शपन्त्यप्रतिपूजिताः। तानि कृत्याहतानीव विन-श्यन्ति समन्ततः। तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः। भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च। जामिः स्वसृकुलस्त्रियो-रित्याभिधानिकाः। नवोढ़ादुहितृस्नुषाद्या जामय इति मेधा-तिथिगोविन्दराजौ। सत्कारेषु कौमुद्यादिषु उत्सवेषूपनयना-दिष्विति कुल्लूकभट्टः। विष्णुधर्म्मोत्तरे। येनेच्छेद्विपुलां प्रीतिं तेन सार्द्धमरिन्दम। न कुर्य्यादर्थसंबन्धं दारसन्दर्शनं तथा।

चतुर्वर्गचिन्तामणावग्निपुराणम्। अप्रजायान्तु कन्यायां न भुञ्जीत कदाचन। दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचसि। महारसत्वसमाकीर्णान्नास्ति ते नरकाद्भयम्। तीर्णस्त्वं सर्व-दुःखेभ्यः परं स्वर्गमवाप्स्यसि। कामधेनावादित्यपुराणम्। विष्णुं जामातरं मन्ये तस्य मन्युं न कारयेत्। अप्रजायान्तु कन्यायां

नाश्नीयात्तस्य वै गृहे। आम्ब्रदेया विशेषेण नैव भोज्यं सदैव तु।
तस्येति संबन्धलक्षणा षष्ठी। मन्युं क्रोधम्। अपरार्के आदिपुराणम्। ब्रह्मादेयां न वै कन्यां दत्त्वाऽश्नीयात् कदाचन। अथ भुञ्जीत मोहाच्चेत् पूयाखेऽ नरके वसेत्।

मनुः। अस्वतन्त्राः स्त्रियः कार्य्याः पुरुषैः स्वैर्दिवानिशम्। विषयेषु च सज्जन्त्यः संस्थाप्या आत्मनोवशे। विषयेषु गीतादिषु सज्जन्त्यः प्रसङ्गं कुर्वत्यः। दक्षः। प्राकाम्ये वर्त्तमाना तु स्नेहान्न तु निवारिता। अवश्या सा भवेत् पश्चात् यथा व्याधिरुपेक्षितः। मनुः। पिता रक्षति कौमारे भर्त्ता रक्षति यौवने। पुत्राश्च स्थाविरे काले न स्त्री स्वातन्त्र्यमर्हति। याज्ञवल्क्यः। रक्षेत् कन्यां पिता विन्नां पतिः पुत्रास्तु वार्द्धके। अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित् स्त्रियाः। मनुः। सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियोरक्ष्या विशेषतः। द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः। सूक्ष्मेभ्योऽल्पेभ्यः, प्रसङ्गेभ्यः कुसम्पर्केभ्यः। तथा, इमं हि सर्ववर्णानां पश्यन्तोधर्म्ममुत्तमम्। यतन्ते रक्षितुं भार्य्यां भर्त्तारो दुर्बला अपि। तथा, न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम्। एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुम्। अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत्। शौचे धर्म्मेऽन्नपक्त्यां च पारिणाह्यस्य वेक्षणे। अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिः। आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः। अर्थोधनं, तस्य संग्रहः संख्यादिना परिच्छिद्य बन्धनादिना संयम्य सुरक्षितभाण्डादौ स्थापनम्। व्ययस्तस्यैव विनियोगः एतद्भक्तार्थमिदं सूपार्थमेतावच्छाकार्थमित्यादि। शौचं दर्विपिठरादिशुद्धिर्गृहाद्युपलेपनादिश्च। धर्म्मोबलिकुसुमादिभिरर्चनादिः। अन्नपक्तिरन्नपाकः। पारिणाह्यं शय्यादि। वेक्षणे

प्रवेचणे । या आप्तकारिभिः पुरुषैर्गृहे रुद्धास्ताः खल्वरक्षिताः, यास्त्वात्मानमात्मना रक्षन्ति ताः किल सुरक्षिताः । तथा, पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् । स्वप्नोऽन्यगेहे वासश्च नारीणां दूषणानि षट् । तस्मादेतेभ्यो नार्य्योरक्षणीयाइत्यर्थः । वृहस्पतिः । आये व्ययेऽन्नसंस्कारे गृहोपस्काररक्षणे । शौचेऽग्नि-कार्य्ये संयोज्या रक्षा स्त्रीणामियं स्मृता ।

शङ्खः । लालनीया सदा भार्य्या ताड़नीया तथैव च । लालिता ताड़िता चैव स्त्री श्रीर्भवति नान्यथा । मनुः । पुत्त्रः शिष्यस्तथा भार्य्या दासी दासश्च पञ्चमः । प्राप्तापराधास्ताड्याः स्युः रज्वा वेणुदलेन वा । अधस्तात्तु प्रहर्त्तव्यं नोत्तमाङ्गे कदाचन । यत्तु, स्त्रीषु रोषं प्रहारञ्च वर्जयेन्मतिमान् सदेति याज्ञवल्क्यीयं, तदेत-द्व्यतिरिक्तविषयम् ।

याज्ञवल्क्यः । षोड़शर्त्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत् । ब्रह्मचार्य्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत् । स्त्रीणां रजोदर्शनमारभ्य ऋतुनिशाः षोड़श भवन्ति । तासु मध्ये युग्मासु समासु निशासु संविशेत् गच्छेत् । एवं गच्छन् ब्रह्मचार्य्येव भवति । पर्वा-ण्याद्याश्चतस्रो निशाश्च वर्जयेत् । तथा तस्यैव । यथाकामी भवे-द्वाऽपि स्त्रीणां वरमनुस्मरन् । स्वदारनिरतश्चैव स्त्रियोरक्ष्या यतः स्मृताः । स्त्रीणामिच्छया ऋतुकालं विनाऽपि गच्छेत् । एवं किल स्त्रीणामिन्द्रदत्तोवरः, तमनुस्मरन् यथाकामी भवेदित्यर्थः । तत्र हेतुः, स्त्रियोरक्ष्या यतः स्मृताः । अन्यथा खल्वभिलाषपरवशा कदाचिदकार्य्यमपि कुर्य्युः । स्वदारेषु नितरां रतोभवेदित्यत्रा-प्ययं हेतुर्योजनीयः ।

मनुः । अन्योन्यस्याव्यभीचारो भवेदामरणान्तिकः । एष

धर्म्मः समासेन ज्ञेयः स्त्रीपुंसयोः परः। तथा नित्यं यतेयातां स्त्रीपुंसौ तु कृतक्रियौ। यथा नातिचरेतां तौ वियुक्तावितरेतरम्। कृतक्रियौ कृतविवाहौ। अतिचारोऽतिक्रमः। नाभिचरेतामिति पाठेऽभिचारो व्यभिचार इति सएवार्थः।

ज्योतिषे। स्नानं सचैलं तिलमिश्रकर्म्म प्रेतानुयानं कलश-प्रदानम्। अपूर्वतीर्थामरदर्शनञ्च विवर्जयेन्मङ्गलतोऽब्दमेकम्। मासषट्कं विवाहादौ व्रतप्रारम्भणे न च। जीर्णभाण्डादि न त्याज्यं गृहसंमार्जनं तथा। ऊर्द्ध्वं विवाहात् पुत्त्रस्य तथा च व्रतबन्धनात्। आत्मनोमुण्डनं नैव वर्षं वर्षार्द्धमेव च। विवाहादूर्द्ध्वं वर्षं, पुत्त्रस्य व्रतबन्धनादूर्द्ध्वं वर्षार्द्धमिति यथासंख्येनान्वयः। योगि-याज्ञवल्क्यः। न स्नायादुत्सवेऽतीते मङ्गलं विनिवर्त्त्य च। अनु-व्रज्य सुहृद्बन्धूनर्च्चयित्वेष्टदेवताम्। चतुर्वर्गचिन्तामणौ स्मृत्यन्तरम्। विवाहव्रतचूड़ासु वर्षमर्द्धं तदर्द्धकम्। पिण्डदानं मृदा स्नानं न कुर्य्यात्तिलतर्पणम्। दिवोदासीये बृहस्पतिः। तीर्थे महालये श्राद्धं मातापित्रोः क्षयेऽहनि। कृतोद्वाहोऽपि कुर्व्वीत पिण्डनिर्व-पणं सदा। ज्योतिर्निबन्धे। विवाहमारभ्य चतुर्थिमध्ये श्राद्धं दिनं दर्शदिनं यदि स्यात्। वैधव्यमाप्नोति तदाऽऽशु कन्या जीवेत् पतिश्चेदनपत्यता स्यात्। क्षयाहश्राद्धं विवाहात् परतएव कार्य्यं न विवाहमध्ये। तदुक्तं तत्रैव। विवाहमध्ये यदि चेत् क्षयाहस्तत्र समुख्याः पितरो न यान्ति। वृत्ते विवाहे परतस्तु कुर्य्यात् श्राद्धं स्वधा-भिर्न्नतु दूषयेत्तम्। गर्गः। व्यतीपातं च संक्रान्तौ ग्रहणे वैधृतावपि। श्राद्धं विना शुभं नैव प्राप्तकालेऽपि मानवः। कुर्य्यादिति शेषः। विना शुभमित्युक्तेः शुभेषु पुत्रजन्मादिषु वृद्धिश्राद्धं कर्त्तव्यमेव। तथा, अमासंक्रान्तिविध्यादौ प्राप्तकालेऽपि नाचरेत्।

कालादर्शे बार्हस्पत्यम्। एकोदरप्रसूतानामेकस्मिन्नपि वासरे। विवाहो नैव कर्त्तव्यो गर्गस्य वचनं यथा। वासरे इति गौड़ाः। वत्सरे इत्यौढ्राः। मत्स्यसूक्ते। एकस्मिन् दिवसे चैव सोदराणां तथैव च। युग्ममौद्वाहिकं वर्ज्यं कन्यादानद्वयन्तथा। वृद्धमनुः। एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः। न समानक्रियां कुर्य्यान्मातृभेदे विधीयते। एकस्य पुंसो विवाहद्वयमेकदिने निषिद्धं मातृभेदाभावादिति कमलाकरभट्टोक्तं चिन्त्यम्। यतः पुरुषस्य स्त्रियाश्च द्वयोः समानक्रिया खल्वेकवत्सरे निषिद्धा न त्वेकस्यैकस्मिन् दिने समानक्रियाद्वयमिति सुधीभिर्भाव्यम्। वराहः। विवाहस्त्वेकजातानां षण्मासाभ्यन्तरे यदि। असंशयं त्रिभिर्वर्षैस्तत्रैका विधवा भवेत्। उत्तरार्द्धतात्पर्य्यपर्य्यालोचनयैकजातानां कन्यानामित्यर्थः।

मदनरत्नप्रदीपे वसिष्ठः। न पुंविवाहोर्द्धमृतुत्रयेऽपि विवाहकार्य्यं दुहितुः प्रकुर्य्यात्। न मण्डनाच्चापि हि मुण्डनञ्च गोत्रैकतायां यदि नाब्दभेदः। एकोदरभ्रातृविवाहकृत्ये स्वसुर्न पाणिग्रहणं विधेयम्। षण्मासमध्ये मुनयः समूचुर्न मुण्डनं मण्डनतोऽपि कार्य्यम्। मण्डनं व्रतोद्वाहौ, मुण्डनं चौलम्। गोत्रैकतायामित्यभिधानान्न परं भ्रात्रादेः किन्त्वन्यस्यापि। अतएवोपक्रमे पुंविवाहोर्द्धमिति सामान्येनोक्तम्। यदि नाब्दभेदइत्यनेनाब्दभेदे ऋतुत्रयमध्येऽपि कर्त्तव्यमित्युक्तं भवति। ज्योतिर्निबन्धे कात्यायनः। कुले ऋतुत्रयादर्व्वाङ्मण्डनान्न तु मुण्डनम्। प्रवेशान्निर्गमो नेष्टो न कुर्य्यान्मङ्गलत्रयम्। कुर्वन्ति मुनयः केचिदन्यस्मिन् वत्सरे लघु। लघु वा गुरु वा कार्य्यं प्राप्तं नैमित्तिकन्तु यत्। पुत्रोद्वाहः प्रवेशाख्यः कन्योद्वाहस्तु निर्गमः। मुण्डनञ्चौलमित्युक्तं

प्रतोद्वाहौ तु मण्डनम्। चौलं मुण्डनमेवोक्तं वर्जयेन्मण्डनात् परम्। मौञ्जी चोभयतः कार्य्या यस्मान्मौञ्जी न मुण्डनम्। प्रवेशात् परं ऋतुत्रयमध्ये निर्गमो न करणीयः। ऋतुत्रयमध्येऽपि वत्सरान्तरप्रवेशे लघु मङ्गलं केचिन्मुनयः कुर्वन्ति। नैमित्तिकन्तु गर्भाधानादिकं लघु वा गुरु वा कर्त्तव्यमेव। चौलमेव मुण्डन-मुक्तमिति संबन्धः।

मदनरत्ने। ऋतुत्रयस्य मध्ये चेदन्याब्दस्य प्रवेशनम्। तदा ह्येकोदरस्यापि विवाहस्तु प्रशस्यते। सारावल्याम्। फाल्गुने चैत्रमासे तु पुत्रोद्वाहोपनायने। भेदादब्दस्य कुर्व्वीत नर्त्तुत्रयविलम्बनम्। फाल्गुने एकस्य पुत्रस्य विवाहे सति चैत्रे अपरस्य पुत्रस्योपनयने न दोषः। अब्दभेदात्। तथा च ब्रह्मपुराणम्। चैत्रे मासि जग-द्धाता ससर्ज्ज प्रथमेऽहनि। शुक्लपक्षे समग्रं तु तदा सूर्य्योदये सति। प्रवर्त्तयामास तदा कालस्य गणनामपि। ग्रहान् राशीनृतून् मासान् वत्सरान् वत्सराधिपान्। संहिता-प्रदीपे। ऊर्द्धं विवाहात्तनयस्य नैव कार्य्यो विवाहो दुहितुः समाऽर्द्धम्। अप्राप्य कन्यां श्वशुरालयञ्च वधूः प्रवेश्या स्वगृहं न चादौ। अप्राप्य अप्रापय्य। कश्यपः। मौञ्जीबन्धस्तथोद्वाहः षण्मासाभ्यन्तरेऽपि वा। पुत्रुद्वाहं न कुर्व्वीत विभक्तानां न दोषकृत्। मदनरत्ने वशिष्ठः। द्विशोभनं त्वेकगृहेऽपि नेष्टं शुभन्तु पश्चान्नवभिर्दिनैस्तु। आवश्यकं शोभनमुत्सवो वा द्वारेऽथवाऽऽचार्य्य-विभेदतो वा। नवदिनप्रतीक्षाऽसम्भवे द्वारादौ कार्य्यमित्यर्थः। कात्यायनः। अभिन्ने वत्सरेऽपि स्यात्तदहस्त्वत्र भेदयेत्। अभेदे तु विनाशः स्यान्न कुर्य्यादेकमण्डपे। अब्दभेदेऽप्येकमण्डपे न कुर्य्या-दित्यर्थः। कपर्दिकारिकावराहमिहिरौ। उद्वाह्य पुत्रीं न पिता

विदध्यात् पुत्रान्तरस्योद्वहनं कदाचित् । यावच्चतुर्थं दिनमत्र पूर्वं समाप्य चान्योद्वहनं विदध्यात् । चतुर्थं दिनं यावदिति पूर्वार्द्धेनान्वेति । अत्र चतुर्थदिने पूर्व्वमुद्वाहं समाप्य । चतुर्थीहोमेनोद्वाहसमाप्तेः । स्मृतिदर्पणेऽपि । पुत्रीपरिणयादूर्द्धं यावद्दिनचतुष्टयम् । पुत्रान्तरायाः कुर्व्वीत नोद्वाहमिति सूरयः । अत्र सापेक्ष-निरपेक्षविषयतयोच्चावचानां कल्पानां व्यवस्थोन्नेया ।

स्मृतिसारावल्याम् । भ्रातृयुगे स्वसृयुगे भ्रातृष्वसृयुगे तथा । एकस्मिन् मण्डपे चैव न कुर्य्यान्मण्डनद्वयम् । गार्ग्यः । भ्रातृयुगे स्वसृयुगे भ्रातृष्वसृयुगे तथा । न कुर्य्यान्मङ्गलं किञ्चिदेकस्मिन् मण्डपेऽहनि । इदं सोदरविषयम् । ज्योतिर्विवरणे । एकोदरयोर्द्वयोरेकदिनोद्वहने भवेन्नाशः । नद्यन्तरएकदिने केऽप्याहुः सङ्कटे च शुभम् । ऊर्द्धं विवाहाच्छुभदोनरस्य नारीविवाहो न ऋतुत्रयं स्यात् । नारीविवाहात्तदहेऽपि शस्तं नरस्य पाणिग्रहमाहुरार्य्याः । एवञ्च गार्ग्यवचनं प्रथमं भ्रातुर्विवाहविषयम् । ज्योतिर्निबन्धे नारदः । प्रत्युद्वाहो नैव कार्य्यो नैकस्मै दुहितृद्वयम् । नैवैकजन्ययोः पुंसोरेकजन्ये तु कन्यके । देये इति शेषः । तथा । नैवं कदाचिदुद्वाहो नैकदा मुण्डनद्वयम् । नैकजन्ये तु कन्ये द्वे पुत्रयोरेकजन्ययोः । न पुत्रीद्वयमेकस्मै प्रदद्यात्तु कदाचन ।

यमजयोस्तु एकस्मिन्नपि दिने चौरादिकं कार्य्यमित्याह गार्ग्यः । एकस्मिन् वासरे प्राप्ते कुर्य्यात् यमलजातयोः । चौरञ्चैव विवाहञ्च मौञ्जीबन्धनमेव च । भिन्नमातृजयोरप्याह मेधातिथिः । पृथङ्मातृजयोः कार्य्यो विवाहस्त्वेकवासरे । एकस्मिन्मण्डपे कार्य्यः पृथग्वेदिकयोस्तथा । पुष्पपट्टिकयोः कार्य्यं दर्शनं न शिरःस्थयोः । भगिनीभ्यामुभाभ्याञ्च यावत् सप्तपदी भवेत् ।

अथ पुनर्विवाहः॥ श्रीधरीये। पुनर्विवाहं वक्ष्यामि दम्पत्योः शुभवृद्धिदम्। लग्नेन्दुलग्नयोर्दोषे ग्रहताराादिसम्भवे। अन्येष्वशुभकालेषु दुष्टयोगादिसम्भवे। विवाहे चापि दम्पत्योराशौचादिसमुद्भवे। तस्य दोषस्य शान्त्यर्थं पुनर्वैवाह्यमिष्यते। तदनेनैवमादिदोषे विवाहसिद्धावपि दोषशान्त्यर्थं पुनर्विवाहः कर्त्तव्यइत्युक्तम्। नेदमिदानीं प्रचरति। वैवाह्यमिति स्वार्थे तद्धितः।

अथाधिवेदनम्॥ मनुः। मद्यपाऽसाधुवृत्ता च प्रतिकूला च या भवेत्। व्याधिता चाधिवेत्तव्या हिंस्राऽर्थघ्नी च सर्व्वदा। अधिवेदनं भार्य्यान्तरपरिग्रहः। तथा। या रोगिणी स्यात्तु हिता सम्पन्ना चैव शीलतः। साऽनुज्ञाप्याधिवेत्तव्या नावमान्या च कर्हिचित्। याज्ञवल्क्यः। सुरापी व्याधिता धूर्त्ता वन्ध्याऽर्थघ्न्यप्रियंवदा। स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी च या। माधवाचार्य्यधृतं ब्रह्मपुराणम्। धर्मविघ्नकरीं भार्य्यामसतीञ्चातिरोगिणीम्। त्यजेद्धर्म्मस्य रक्षार्थं तथैवाप्रियवादिनीम्। न त्यजेदधिविन्देत न तु भोगं परित्यजेत्। अप्रियवादिनीं न त्यजेदिति संबन्धः। मनुः। वन्ध्याऽष्टमेऽधिवेत्तव्या दशमे तु मृतप्रजा। एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी। अप्रियमेव या वदति सैवमुच्यते। संग्रहे। अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत्। मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम्। धर्म्मप्रजासम्पन्नायां भार्य्यायां सत्यान्त्वधिवेदनं निषेधत्यापस्तम्बः। धर्म्मप्रजासम्पन्ने दारे नान्यां कुर्व्वीतेति।

कामार्थे त्वधिवेदने न निमित्तापेक्षा किन्तु पूर्वोढ़ा धनैस्तोषणीया। तथा च पराशरभाष्ये स्मृतिः। एकामुद्वाह्य

कामार्थमन्यां लब्धुं य इच्छति। समर्थस्तोषयित्वाऽर्थैः पूर्व्वोढ़ामपरां वहेत्।

मात्स्ये। उद्वहेद्रतिसिद्धार्थं तृतीयां न कदाचन। मोहादज्ञानतोवाऽपि यदि गच्छेत्तु मानुषीम्। नश्यत्येव न सन्देहो गर्गस्य वचनं यथा। गच्छेदुद्वहेत्। मानुषीं तृतीयामित्यर्थः। रतिसिद्धार्थमित्युपादानात् पूर्वभार्य्यायां विद्यमानायां कामार्थमेव तृतीयस्या मानुष्या विवाहो न कर्त्तव्यः। संग्रहे। तृतीयां यदि चोद्वाहेत्तर्हि सा विधवा भवेत्। चतुर्थादिविवाहार्थं तृतीयेऽर्कं समुद्वहेत्। अर्कमर्ककन्याम्। तद्विवाहविधिस्तु निर्णयसिन्धुप्रभृतिषु द्रष्टव्यः। गौड़ास्तु, कदलीकन्यायाः सप्तधा प्रदक्षिणमात्रं कुर्वन्ति। गृहस्थरत्नाकरे। त्रिविवाहं कृतं येन न करोति चतुर्थकम्। कुलानि पातयेत् सप्त भ्रूणहत्याव्रतं चरेत्। प्रमादादिना तृतीयां मानुषीमुद्वाह्याविलम्बेन चतुर्थीमुद्वहेदित्यर्थः। एतद्वर्त्तमानस्त्रीत्रयपरमिति प्राञ्चः।

याज्ञवल्क्यः। अधिविन्नस्त्रियै देयमाधिवेदनिकं समम्। न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्द्धं प्रकीर्त्तितम्। यस्या उपरि भार्य्यान्तरपरिग्रहः सा अधिविन्ना, तस्यै स्त्रियै आधिवेदनिकम् अधिवेदनसम्बन्धिनमर्थं समं यावानधिवेदनार्थं व्ययितः तावन्तं दद्यात्। उद्वाह्यमानस्त्रियै देयसममिति केचित्। याज्ञवल्क्यः। अधिविन्ना तु भर्त्तव्या महदेनोऽन्यथा भवेत्। यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्द्धते। मनुः। अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात्। सा सद्यः संनिरोद्धव्या त्याज्या वा कुलसन्निधौ। त्यागो नाम तदीयजनककुलप्रेषणमिति माधवाचार्य्याः।

याज्ञवल्क्यः । आज्ञासम्पादिनीं दक्षां वीरसूं प्रियवादिनीम् । त्यजन् दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः । त्यागकारणाभावे त्यजन् स्वधनस्य तृतीयमंशं राज्ञा दापनीयः, धनस्य त्वभावे स्त्रिया भरणं दाप्यः । मनुः । संवत्सरं प्रतीक्षेत द्विषन्तीं योषितं पतिः । ऊर्द्धं संवत्सरात्त्वेनां दायं हृत्वा न संवसेत् । दायं स्वदत्तं धनम् । तथा । अतिक्रामेत् प्रमत्तं या मत्तं रोगार्त्तमेव वा । सा त्रीन् मासान् परित्याज्याऽविभूषणपरिच्छदा । अविभूषणेति च्छेदः । तथा । उन्मत्तं पतितं क्लीबमबीजं पापरोगिणम् । न त्यागोऽस्ति द्विषन्त्याश्च न च दायापवर्त्तनम् ।

याज्ञवल्क्यः । व्यभिचाराद्दतौ शुद्धिर्गर्भे त्यागो विधीयते । गर्भभर्त्तृवधादौ च तथा महति पातके । एवञ्च सुराप्या न परमधिवेदनं किन्तु परित्यागोऽपि । सुरापानस्य महापातकत्वात् । हारीतः । गर्भिणीमधोवर्णगां शिष्यसुतगामिनीं पापव्यसनासक्तां धनधान्यक्षयकरीं वर्जयेत् । यमः । ब्राह्मणक्षत्रियविशां भार्य्याः शूद्रेण सङ्गताः । अप्रजास्ता विशुद्ध्यन्ति प्रायश्चित्तेन नेतराः । इतरस्यास्त्याग एवेत्यर्थः । तथा । स्वच्छन्दगा च या नारी तस्यास्त्यागो विधीयते । न चैव स्त्रीवधः कार्य्यो न चैवाङ्गवियोजनम् । व्यासः । चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या । पतिघ्नी च विशेषेण जुङ्गितोपगता च या । जुङ्गितः प्रतिलोमज इति मिताक्षरा । त्यागश्चास्या उपभोगादौ, न तु गृहान्निष्काशनम् । विप्रदुष्टां स्त्रियं भर्त्ता निरुन्ध्यादेकवेश्मनीति स्मरणात् । विप्रदुष्टां विशेषेण प्रकर्षेण दुष्टाम् । याज्ञवल्क्यः । हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् । परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम् ।

द्वितीयादिविवाहकालः स्मृतिसंग्रहे । प्रमदामृतिवासरा-

ंदितः पुनरुद्वाहविधिर्वरस्य च । विषमेऽयुगवत्सरे शुभोयुगले चापि मृतिप्रदो भवेत् । मृतभार्य्येण पारिव्राज्यविमुखेन त्ववश्यं विवाहान्तरं कर्त्तव्यम् । कञ्चिदपि कालमाश्रममन्तरेणावस्थाने प्रत्यवायापत्तेः । चत्वारः खल्वाश्रमाः ब्रह्मचर्य्यं गार्हस्थ्यं वानप्रस्थं संन्यासश्चेति । तदुक्तं वामनपुराणे । चत्वार आश्रमाश्चैते ब्राह्मणस्य प्रकीर्त्तिताः । गार्हस्थ्यं ब्रह्मचर्य्यं च वानप्रस्थं त्रयोऽऽश्रमाः । क्षत्रियस्यापि कथिता य आचारा द्विजस्य हि । ब्रह्मचर्य्यं च गार्हस्थ्यमाश्रमद्वितयं विशः । गार्हस्थ्यमुचितन्त्वेकं शूद्रस्य क्षणदाचर । त्रयोऽऽश्रमा इत्यत्र त्रयोमता इति, य आचारा द्विजस्य हीत्यत्र आश्रमास्त्रय एव हीति च तत्त्वकृतः पठन्ति ।

उचितपदस्वरसात् शूद्रस्याश्रमो नातीवावश्यक इति गम्यते । अतएव माधवाचार्य्यादिधृता स्मृतिः । चत्वार आश्रमास्तात तेषु शूद्रस्तु नार्हति । किन्त्वनिषिद्धत्रैवर्णिकाचारस्य तस्याप्यनुज्ञानादुचितो गृहस्थाश्रम इत्यवसीयते । क्षणदाचरेति सुकेशिनाम्नो-रक्षसः संबोधनम् । योगियाज्ञवल्क्यः । चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः । क्षत्रियस्य त्रयः प्रोक्ता-द्वावेको वैश्यशूद्रयोः । गार्हस्थ्यन्तु सपत्नीकस्यैव भवति, न गृहावस्थानमात्रेण । सपत्नीकस्येव यज्ञादावधिकारात् । अतएव भट्टभाष्ये स्मृतिः । न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते । तया हि सहितः सर्वान् पुरुषार्थान् समश्नुते ।

आश्रममन्तरेणावस्थाने दोषमाह विष्णुपुराणम् । व्रतेषु लोपकोयश्च आश्रमाद्विच्युतश्च यः । सन्दंशयातनामध्ये पतत-स्तावुभावपि । दक्षः । अनाश्रमी न तिष्ठेत्तु क्षणमेकमपि द्विजः । आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते त्वसौ । जपे होमे तथा

दाने स्वाध्याये वा रतः सदा । नासौ फलमवाप्नोति कुर्वाणोऽप्याश्रमात् च्युतः । आश्रमेण विना क्षणमेकमपि न तिष्ठेदिति ब्रुवाणोऽविलम्बेनाश्रमानुसरणमुपदिशति । अतएव च्छन्दोगपरिशिष्टे कात्यायनः । यस्य दत्ता भवेत् कन्या वाचा सत्येन केनचित् । सोऽन्त्यां समिधमाधास्यन्नादधीतैव नान्यथा । अनूढैव तु सा कन्या पञ्चत्वं यदि गच्छति । न तथा व्रतलोपोऽस्य तेनैवान्यां समुद्वहेत् । अथ चेन्न लभेतान्यां याचमानोऽपि कन्यकाम् । तमग्निमात्मसात् कृत्वा क्षिप्रं स्यादुत्तराश्रमी । यस्मै ब्रह्मचारिणे केनचित् कन्या वाग्दत्ता भवेत्, सोऽन्त्यसमिदाधानेन ब्रह्मचर्य्यं समापयिष्यन्नग्निमादधीत । वाग्दानमन्तरेण ब्रह्मचर्य्यसमापने कृते तु कञ्चित् कालमनाश्रमी स्यादिति वाग्दानानन्तरं विवाहसन्निधौ कस्मिंश्चिदहनि अन्त्यां समिधमादधीत । तस्याः कन्यायामरणे कन्यान्तरस्य चालाभे सन्न्यासाश्रमी भवेदित्याह ।

पैठीनसिस्तु स्नातकव्रताचरणमभिधत्ते । यथा । अलाभे चैव कन्यायाः स्नातकव्रतमाचरेत् । सोऽयं विकल्पः, संन्यसेद्वा स्नातकव्रतं वाऽऽचरेदिति । वशिष्ठः । गृहस्थो विनीतवेशोऽक्रोधहर्षो गुरुणाऽनुज्ञातः स्नात्वाऽसमानार्षेयीमस्पृष्टमैथुनामवरवयस्कां सदृशीं भार्य्यां विन्देत । गृहस्थ इति भाविनि भूतवदुपचारस्तद्धर्म्मप्राप्त्यर्थः । तेनाकृतदारोऽपि गार्हस्थ्यसङ्कल्पवानाश्रमान्तरनिवृत्तो गृहस्थधर्म्मेष्वधिक्रियते इति यज्ञपार्श्व इति कल्पतरुः । मृतभार्य्यस्य तु पुनर्दारकरणासम्भवे पारिव्राज्यमाह पराशरस्मृतिव्याख्यायां यमः । पुनर्दारक्रियाऽभावे मृतभार्य्यः परिव्रजेत् । अङ्गिरसोऽप्येतद्वचनं, किन्तु पुनर्दारक्रियाऽभावादिति तत्र पाठः ।

अकृतोद्वाहस्य मृतभार्य्यस्यापि पारिव्राज्याभावे स्नातकव्रताचरणं वदन्ति।

तत्रापि विशेषमाह भविष्यपुराणम्। चत्वारिंशद्दत्सराणां साष्टानां च परे यदि। स्त्रिया वियुज्यते कश्चित् स तु रण्डाश्रमी मतः। अष्टचत्वारिंशदब्दं वयो यावन्न पूर्य्यते। पुत्त्रभार्य्याविमुक्तस्य नास्ति यज्ञेऽधिकारिता। रण्डो मृतपत्नीकः। रण्डः स्यान्मृतपत्निक इति कोषात्। नास्ति यज्ञेऽधिकारिता इति यज्ञानां पत्नीसंयोगेनैवोपदेशादित्यभिप्रायः। यद्यपि अष्टचत्वारिंशद्वर्षेभ्यः परतोऽपि पत्न्यभावे यज्ञाधिकारो न भवितुमर्हति, तथापि वचनप्रामाण्यात्तदानीं पत्नीप्रतिनिधिमुपकल्प्य यज्ञः करणीयः। अतएव च्छन्दोगपरिशिष्टम्। मृतायामपि भार्य्यायां वैदिकाग्निं न हि त्यजेत्। उपाधिनाऽपि तत् कर्म्म यावज्जीवं समाचरेत्। रामोऽपि कृत्वा सौवर्णीं सीतां पत्नीं यशस्विनीम्। ईजे यज्ञैर्बहुविधैः सह भ्रातृभिरच्युतः।

यत्तु, आश्रमाद्विच्युतश्च य इति सामान्यतोऽभिधानात् शूद्रस्यापि तथात्वमिति पूर्वोक्तदक्षवचने द्विजपदमुपलक्षणमिति तत्त्वकृद्भिरुक्तम्। तच्चिन्त्यम्। येषामाश्रमोऽनुशिष्टस्तेषामेवाश्रमविच्युतानां परामर्शौचित्यात्। पूर्व्वोक्तरीत्या शूद्रस्याश्रमस्यावश्यकत्वाभावाच्च। किञ्च। दक्षेण, स्वीकरोति यदा वेदं चरेद्वेदव्रतानि च। ब्रह्मचारी भवेत्तावदूर्द्ध्वं स्नातो भवेद्गृही इत्युपक्रम्य ब्रह्मचारिणामुपकुर्व्वाणकनैष्ठिकभेदेन द्वैविध्यमुक्त्वा, यो गृहाश्रममास्थाय ब्रह्मचारी भवेत् पुनः। न यतिर्न वनस्थश्च सर्व्वाश्रमविवर्ज्जितः इत्याश्रमव्यतिक्रमं निन्दित्वा, अनाश्रमी न तिष्ठेदित्यादिवचनद्वयमभिधाय, त्रयाणामानुलोम्यं हि प्रातिलोम्यं न विद्यते।

प्रातिलोम्येन यो याति न तस्मात् पापकृत्तम इत्युक्तम्। तदत्रोपक्रमोपसंहारयोर्द्विजातिविषयत्वस्याकामेनापि वाच्यत्वात्तन्मध्यपठितमनाश्रमी न तिष्ठेदित्यादिवचनद्वयमपि द्विजातिविषयमवश्यं वक्तव्यमिति कथं द्विजपदस्योपलक्षणत्वं शक्यते वक्तुम्। किञ्च। तत्रैवानाश्रमिणो जपहोमस्वाध्यायादीनां निष्फलत्वाभिधानात् स्वाध्यायादेश्च शूद्रस्यासम्भवात् द्विजातिविषयत्वमेव तस्य सिध्यति। तदेवं द्विजपदानुपादानेऽपि यदा वचनस्य तद्विषयत्वं वर्णनीयं भवति, तदा कैव कथोपात्तस्य द्विजपदस्योपलक्षणतायामित्यास्तां विस्तरः।

अथ परिवेदनम्॥ हारीतः। जेष्ठेऽनिविष्टे कनीयान् निविशमानः परिवेत्ता भवति परिविन्नोज्येष्ठः परिवेदनीया कन्या परिदायी दाता परियष्टा याजकस्ते सर्वे पतिताः। जेष्ठे अग्रजे। वक्ष्यमाणवचनजातात्। अनिविष्टे अकृतविवाहे। निवेशः पुंसि विन्यासे शिविरोद्वाहयोरपीति मेदिन्युक्तेः। परिवेदनीया कन्येत्यादिस्वरसात् च। चतुर्व्वर्गचिन्तामणौ देवलः। जेष्ठे चाप्यनिविष्टे च जेष्ठमुत्क्रम्य यः पुनः। विन्देत परिविन्तिश्च परिवेत्ता च तावुभौ। विज्ञानेश्वरापरादित्यहेमाद्रिप्रभृतिभिरनिविष्टे इति पठितत्वादनिविष्टेऽकृतविवाहे इति व्याख्यातत्वाच्चानिर्विष्टे इत्यपपाठः। अर्थासङ्गतेश्च। भोगवेतनमूर्च्छनेषु खल्वभिधानकाण्डे निर्वेशशब्दः पठ्यते। एवमग्निहोत्रेणापि परिवेदनदोषो भवति। दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते। परिवेत्ता स विज्ञेयः परिविन्तिस्तु पूर्व्वज इति मनुशातातपोक्तेः। स्थिते अकृतविवाहे अकृताग्निहोत्रे च स्थिते। अग्निहोत्रं त्रेताऽग्नौ क्रियते। तेन जेष्ठेन त्रेताऽऽधानेऽकृते कनिष्ठस्य तन्नि-

षिद्धम् । एवमावसथ्याधानमपि । सोदर्य्ये तिष्ठति ज्येष्ठे न कुर्य्यादारसंग्रहम् । आवसथ्यन्तथाऽऽधानं पतितस्त्वन्यथा भवेदिति मदनरत्नप्रदीपे गार्ग्योक्तेः । तिष्ठति अकृतविवाहे अकृतावसथ्याधाने च तिष्ठति । एवमिज्यादिकमपि निषिद्धं, वक्ष्यमाणप्रतिप्रसववचनस्वरसात् । एतेनानिविष्टे अकृतविवाहे अकृताग्निहोत्रे चेति तत्त्वकारव्याख्यानं चिन्त्यम् ।

छन्दोगपरिशिष्टं कात्यायनः । आधानकाले ये प्रोक्तास्तथा ये चाग्नियोनयः । तदाश्रयोऽग्निमादध्यादग्निमानग्रजो यदि । दाराधिगमनाधाने यः कुर्य्यादग्रजाग्रिमः । परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः । परिवित्तिपरिवेत्तारौ नरकं गच्छतो ध्रुवम् । अचीर्णप्रायश्चित्तौ तौ पादोनफलभागिनौ । इतरोपपातकनरकफलस्य पादोनस्य भागिनाविति परिशिष्टप्रकाशः । देवलः । ज्येष्ठायां विद्यमानायां कन्यायामुह्यतेऽनुजा । सा चाग्रेदिधिषूर्ज्ञेया पूर्व्वा तु दिधिषूः स्मृता । विद्यमानायामनूढ़ायां विद्यमानायाम् । ज्येष्ठायां यद्यनूढ़ायामित्येव लोगाक्षिः पठति । तदनेन ज्येष्ठायामनूढ़ायां कनिष्ठाया विवाहो न करणीयः । सर्व्वएवामी संज्ञाविशेषाः प्रायश्चित्तविशेषज्ञापनार्थाः ।

मदनपारिजातादिषु वशिष्ठः । परिवित्तिः कृच्छ्रं द्वादशरात्रं चरित्वा निविशेत ताञ्चैवोपयच्छेत परिविविदानः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निविशेत तामेवोपयच्छेत । कनिष्ठस्य विवाहात् परतोऽकृतप्रायश्चित्तएव कृतविवाहो ज्येष्ठः द्वादशरात्रं कृच्छ्रं चरित्वा निविशेतोद्वहेत् । कामित्यपेक्षायामुक्तं तामेवोपयच्छेतेति । तां स्वेन पूर्वमूढ़ामेव विवहेत् । उपयमो विवाहः । परिविविदानपदेन परि-

वेत्तोच्यते। स क्षच्छ्रातिकृच्छ्रौ चरित्वा स्वोढ़ां तस्मै ज्येष्ठाय दत्त्वा पुनर्निर्विशेतोद्वहेत्। कामित्यपेक्षायामुक्तं तामवोपयच्छेतेति। तां पूर्व्वोढ़ामेव ज्येष्ठाय दत्तां तेन चाभ्यनुज्ञातामुपयच्छेत। पुनःपदस्वरसाच्चैतदेवं प्रतिपत्तव्यम्। ज्येष्ठाय दानञ्चेदं गुरुपरिभवपरिहारार्थं ब्रह्मचार्य्याहृतभैक्षवद्गुरवे समर्पणमिति द्रष्टव्यम्। मिताक्षरामदनपारिजातप्रायश्चित्तमाधवीयेष्वियं व्यवस्था।

अपरादित्यस्तु याज्ञवल्क्यटीकायां, परिविवित्तिः कृच्छ्रं द्वादशरात्रं प्राजापत्यं चरित्वा निर्विशेतोद्वहेत् तां च कनीयसा पूर्वं परिणीतां तेन दत्तामुपयच्छेत स्वीकुर्य्यादुद्वहेदिति यावत्। तस्यैव सा भार्य्या नानुजस्य अशास्त्रीयत्वात्तद्विवाहस्य, भार्य्यात्वं च शास्त्रीयविवाहजन्यम्। अनुजो व्युत्क्रमेण विवाहमाचरन् परिविविदान उच्यते। स कृच्छ्रातिकृच्छ्रौ चरित्वा ज्येष्ठाय तस्मै तां व्युत्क्रमोढ़ां दत्त्वा पुनर्निर्विशेतान्यामुद्वहेदिति व्याख्यातवान्। एतच्चिन्त्यम्। अत्यन्तलोकविद्विष्टत्वादिति मदनपारिजातः। एतद्व्याख्यायां परिविविदानमधिकृत्य तामेवोपयच्छेतेति पुनर्नारम्भणीयं स्यात्। तदभिधानस्यार्थवत्त्वोपपत्तये तु पूर्वैव व्याख्या ज्यायसी प्रतिभाति। यद्यपि, परिविविदानमधिकृत्य तामेवोपयच्छेतेत्ययमंशो याज्ञवल्क्यटीकायामपरादित्येन न पठितः, तथापि मिताक्षरामदनपारिजातप्रायश्चित्तमाधवीयादिषु पठितत्वाद्व्याख्यातत्वाच्चादरणीयः।

ज्येष्ठमतिक्रम्य कनीयसा विवाहे कृते ज्येष्ठे चाकृतविवाहे त्वाह हारीतः। ते सर्वे पतिता इत्यभिधाय, संवत्सरं प्राजापत्येन कृच्छ्रेण पापमपनुदेयुः समाप्तेऽब्दे तां कन्यां ज्येष्ठायोपपादयेयुः स तामनुमान्यान्यया निर्विशेतैवं धर्म्मो न लुप्यते। स ज्येष्ठः तां

कनिष्ठेनोढ़ां तेनैवोपपादितामनुमान्यानुज्ञाप्यान्यया कन्यया निविशेतान्यामुद्वहेदित्यर्थः। कनिष्ठेनोढ़ा तु ज्येष्ठस्यानुमत्या कनिष्ठस्यैव भार्य्या भवतीत्यभिप्रायः। अपरादित्यस्तु, स तामनुमान्यान्यया निविशेत इत्ययं ग्रन्थोऽन्यथा पठितवान्, तामनुपयन् कनीयानन्यया निविशेतेति। प्रायश्चित्तविवेके तु पूर्व्वलिखित एव पाठः तट्टीकाकृद्भिर्व्याख्यातश्च। स एव पाठः समीचीनः प्रतिभाति। उपपादयेयुरिति कनीयसां बहुवचनेन निर्देशात् तामनुपयन् कनीयानित्येकवचनेन तन्निर्देशस्याश्लिष्टत्वात्। तदत्रभवन्तो भूमिदेवाः प्रमाणम्।

यत् पुनः सुमन्तुनोक्तम्। परिवित्तिपरिवेत्तृकन्यादातृयाजकानां द्वादशरात्रं सक्तुप्राशनं ब्राह्मणतर्पणञ्च तां पुनर्भुवमाचक्षते न भूयश्चैनामभिगच्छेदिति। तत् कुतश्चित् कारणादनिवेदितानन्नुज्ञाताविषयम्। निवेदनानुज्ञानयोरत्रानभिधानात्। यथा खल्वनिवेद्य नाशितव्यं तदेव तु निवेद्याशितव्यं तद्वदत्रापीत्यवगन्तव्यम्। ज्येष्ठमतिक्रम्योद्वाह्याभिगमनपर्य्यन्तकरणविषयं च भूयःपदस्वरसाभ्मन्तव्यम्। परित्यक्ता च सा पोष्या भोजनाच्छादनादिभिरिति भवदेवभट्टधृतमप्येतद्विषयम्। वचनान्तराणि त्वेतद्भिन्नविषयाणि। भवतु वा विकल्पः, तां त्यजेद्वा निवेदितानुज्ञातामुद्वहेद्वेति।

मदनपारिजाते तु, सोदरकनिष्ठभ्रात्रा सोदरज्येष्ठकन्या प्रथमं विवाहिता ततो ज्येष्ठभ्रात्रा कनीयसी विवाहिता अथवा ज्येष्ठभ्रात्रा प्रथमं कनीयसी कनिष्ठेन पश्चात् ज्येष्ठा, तत्र परित्याग एवोक्तसुमन्तुवचनात्। सुमन्तुवचनस्य विषयान्तरापेक्षयाऽयमेव विषयो ज्यायानित्युक्तम्। ज्येष्ठस्य ज्येष्ठाया वा विवाहेऽजाते कनिष्ठस्य कनिष्ठाया वा विवाहासम्भवादित्यभिप्रायः। किन्तु

तत्रापि प्रथमं जेष्ठेन कन्यान्तरे परिणीते ततः कनीयसा जेष्ठाया-मूढ़ायां पश्चात् जेष्ठेन कनीयस्याविवाहः सम्भवतीति सुधीभि-र्भाव्यम्।

सुमन्तूक्तन्तु अनिविष्टे जेष्ठे विद्याधर्म्मार्थानामन्यतमार्थं देशान्तरगते पौनःपुन्येन वार्त्ताया अश्रवणे अवधिकालमप्रतीक्ष-माणेन कनीयसा विवाहकरणे वेदितव्यमिति धर्म्मप्रदीपः। अपरादित्यस्तु, देशान्तरव्यवस्थिते जेष्ठे कृतविवाहोऽसाविति भ्रान्त्या कृते परिवेदने निर्गुणे वा जेष्ठे वशिष्ठोक्तं, यदा तु गुणवति जेष्ठे बुद्धिपूर्वकं परिवेदनं ज्येष्ठेन वार्य्यमाणः करोति तदा हारीतोक्तं, क्षत्रियाद्यत्यन्तबालविषयं सुमन्तूक्तमित्याह। शक्ति-गुणानुबन्धाद्यपेक्षया प्रायश्चित्तस्य व्यवस्थाप्यत्वोक्तेरित्यभिप्रायः। पराशरः। द्वौ कृच्छ्रौ परिवित्तेस्तु कन्यायाः कृच्छ्र एव च। कृच्छ्राति-कृच्छ्रौ दातुस्तु होता चान्द्रायणं चरेत्। यमस्याप्येतादृग्वचनम्। किन्तु तत्र, द्वौ कृच्छ्रौ परिवित्तेः स्यात् इति प्रथमचरणे पाठः। शङ्खलिखितौ। परिविन्तिः परिवेत्ता च संवत्सरं ब्राह्मणगृहेषु भैक्षं चरेयाताम्। शङ्खः। परिविन्तिः परिवेत्ता च यया च परिविद्यते। व्रतं संवत्सरं कुर्य्युर्दातृयाजकपञ्चमाः।

वशिष्ठः। अग्रेदिधिषूपतिः कृच्छ्रं द्वादशरात्रं चरित्वा निवि-शेत ताञ्चैवोपयच्छेत दिधिषूपतिः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निविशेत। अग्रेदिधिषूपतिः द्वादशरात्रं कृच्छ्रं प्राजा-पत्यं चरित्वा जेष्ठायां पश्चादन्येनोढ़ायां तामेवोद्वहेत्, दिधिषू-पतिस्तु कृच्छ्रातिकृच्छ्रौ चरित्वा स्वोढ़ां जेष्ठां तस्मै कनीयस्याः पूर्व्वोढ्रे दत्त्वाऽन्यामुद्वहेदिति माधवाचार्य्याः। मिताक्षरायामप्ये-वम्। मदनपारिजाते तु, दिधिषूपतिर्जेष्ठायाः पतिस्तां तथा

कनिष्ठापतये तस्मै पूर्ववद्दत्त्वा कृच्छ्रातिकृच्छ्रौ चरित्वा पुनः पूर्वपरिणीतामेवोद्वहेदित्युक्तम्। अत्रायमाशयः। ताञ्चैवोपयच्छेते-त्यवचनेऽपि पुनर्निविशेतेत्यभिधानात् पूर्वोढां दिधिषूमेव पुनरुद्वहे-दिति प्रतीयते। तस्मै दत्त्वेत्यत्र दिधिष्वादानस्यावश्यवक्तव्यत्वेन पुनर्निविशेतेत्यत्रापि तस्या एव पुनरुद्वाहोऽवगम्यते। यथाश्रुतार्थ-परतयैवोपपन्नस्य वाक्यस्यार्थान्तरकल्पने नानाभावश्चेति। अतएव निविशेतेत्युक्त्वा ताञ्चैवोपयच्छेतेति विशेषितं, पुनर्निविशेतेत्यत्र तु पुनःपदादेव तथाऽवगतेः ताञ्चैवोपयच्छेतेति न पुनर्विशेषित-मिति। यच्च पूर्वलिखितवशिष्ठवचने पुनर्निविशेतेत्यभिधाय ताञ्चैवोपयच्छेतेत्युक्तम्। तदपि पूर्वस्यैव स्पष्टीकरणार्थम्। सामान्य-विधिरस्पष्टः संक्रियेत विशेषत इति न्यायात्। एवञ्च तत्र पुनर्निविशेतेत्यस्य तथाविधार्थे तात्पर्य्यस्य कण्ठतएव दर्शितत्वा-दत्रापि तथैवेति।

तत्त्वकृतस्तु, निविशेदन्यामुद्वहेत् तां कनिष्ठां ज्येष्ठाया-वरायोपपादयेदेवं ज्येष्ठामपि कनिष्ठाया वरायेत्याहुः। तच्चि-न्त्यम्। उपयमेरुद्वाहार्थएवात्मनेपदविधानादुपपादनार्थानुप-पत्तेः। यच्चोपयच्छेदिति पठितं, तदपि चिन्त्यम्। विज्ञानेश्वरा-परादित्यविश्वेश्वरभट्टमाधवाचार्य्यप्रभृतिभिः प्राचीनैरुपयच्छेतेति पठितत्वादुद्वाहपरतया व्याख्यातत्वाच्च। मिताक्षरायां गौतमः। परिवित्तिपरिवेत्तृपर्य्याहितपर्य्याधात्रग्रेदिधिषूदिधिषूपतीनां संवत्-सरं प्राकृतं ब्रह्मचर्य्यमिति। अकृताग्न्याधानेऽग्रजे कनिष्ठेनाग्न्या-धाने कृतेऽग्रजः पर्य्याहितोऽनुजश्च पर्य्याधातोच्यते। सोदर्य्ये तिष्ठति ज्येष्ठे योऽग्न्याधेयं करोति हि। तयोः पर्य्याहितो ज्येष्ठः पर्य्याधाता कनिष्ठक इति लौगाक्षिवचनात्।

अपवादमाह छन्दोगपरिशिष्टं कात्यायनः। देशान्तरस्थक्लीवैकवृषणानसहोदरान्। वेश्यातिसक्तपतितशूद्रतुल्यातिरोगिणः। जड़मूकान्धवधिरकुब्जवामनखोड़कान्। अतिवृद्धानभार्य्यांश्च कृषिसक्तान् नृपस्य च। धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा। कुहकोन्मत्तचौरांश्च परिविन्दन् न दुष्यति। धनवार्द्धुषिकं राजसेवकं कर्षकं तथा। प्रोषितञ्च प्रतीक्षेत वर्षत्रयमपि त्वरन्। प्रोषितं यद्यशृखानमब्दादूर्द्धं समाचरेत्। आगते च पुनस्तस्मिन् पादं तच्छुद्धये चरेत्।

एकवृषण एकाण्डः षण्डविशेष इति रत्नाकरः। रोगप्रवृद्धवृषण इति चतुर्वर्गचिन्तामणिः। शूद्रतुल्यमाह हेमाद्रिधृतो देवलः। अनुपासितसन्ध्या ये नित्यमस्नातभोजनाः। नष्टशौचाः पतन्त्येते शूद्रतुल्याश्च धर्म्मतः। यत्तु मनुवचनं, गोरक्षकान् वाणिजिकान् तथा कारुकुशीलवान्। प्रेष्यान् वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेदिति। तत् साक्षिप्रश्नकाले गोरक्षकादयः शूद्रवत् प्रष्टव्या इत्युपदिशति, तत्प्रकरणेऽभिधानात्, न तु तेषां शूद्रतुल्यत्वमभिधत्ते। अतएव, शूद्रवदाचरेदित्युक्तम्। शूद्रतुल्यपदेन तेषां ग्रहणे च नृपसक्तधनवृद्धिप्रसक्तयोः पृथगुपादानमनर्थकं स्यात्। एतेन शूद्रतुल्यपदेन मनुवचनोपात्तानां गोरक्षकादीनां ग्रहणमिति शूलपाणितत्त्वकारोक्तं चिन्तनीयम्।

जड़ाविकलान्तःकरणः हिताहितावधारणाक्षम इति मिताक्षरा। जड़ोऽक्षमः कार्य्येष्वप्रवृत्त इति माधवाचार्य्याः। मेदिनिकरस्तु, हिमग्रस्तमूकाप्राज्ञेषु जड़शब्दं पपाठ। तत्र, मूकस्य स्वशब्देनैव निर्दिष्टत्वादप्राज्ञस्येह ग्रहणं युज्यते। वर्णानुच्चारको-

मूकः। कुब्जः पृष्ठभागे मांसादिविशेषेणात्यन्तविक्षतदेहः। वामनोऽतिह्रस्वदेहः। खोड़ो भग्नपादद्वयइत्याचारमाधवीये। खोड़कोभग्नचरणद्वय इति हेमाद्रिः। कुण्ठकानिति पाठे कुण्ठोऽकर्म्मण्यः, कुण्ठोऽकर्म्मण्यमूर्खयोरिति मेदिन्युक्तेः। यत्तु, कुण्ठः सर्व्वक्रियास्वलसः इति शूलपाणिना, कुण्ठः सर्व्वक्रियालसः कुण्ठोमन्दः क्रियासु य इत्यमरोक्तेरिति तत्त्वकृता च व्याख्यातम्। तच्चिन्त्यम्। मूढ़ाल्पापटुनिर्भाग्यामन्दाइत्यमरेणैवोक्तत्वान्मन्दशब्दस्यालसार्थानुपपत्तेः। तत्पाठे तु, कर्म्मस्वपटुरिति स्यात्।

अभार्य्याः शास्त्रनिषिद्धभार्य्यासंबन्धाः नैष्ठिकब्रह्मचारिवानप्रस्थभिक्षव इति परिशिष्टप्रकाशः। अभार्य्योमृतभार्य्य इति शूलपाणिव्याख्यानन्तु नादरणीयं, मृतभार्य्यस्य कृतविवाहत्वेन परिवेदनदोषाप्रसक्तावपवादस्यानारम्भणीयत्वात्। अभार्य्या नैष्ठिकब्रह्मचारिण इति हेमाद्रिमाधवाचार्य्यव्याख्याऽपि न समीचीना। भिक्षुवानप्रस्थयोरपि तथात्वात्तयोः परित्यागे हेत्वभावात्। नृपस्येति शैषिकी षष्ठी। चकारेण सक्तानिति लभ्यते। कामतोऽकारिणः स्वेच्छयैव नित्यं विवाहमकुर्व्वाणा इति हेमाद्रिः। स्वेच्छयैव विवाहान्निवृत्ता इति माधवाचार्य्याः। शूलपाणितत्त्वकाराभ्यान्तु, कामतः कारिण इति पठितं, श्रौतस्मार्त्तनिरपेक्षस्वच्छन्दव्यवहारिण इति व्याख्यातञ्च। कुहकाः परवञ्चनाय वृथोद्योगपरा इति हेमाद्रिः। आचारमाधवीयेऽपि कुहक-इत्येव पाठः। नारायणोपाध्यायादिभिस्तु कुलट इति पठितं, परकुलाटनशीलोदत्तक इति व्याख्यातं च। तच्चिन्त्यम्। दत्तकस्यासहोदरपदेनैव गतार्थत्वादनतिप्रयोजनत्वापत्तेः। चौरानित्यत्र पौरानिति पाठे, प्रेष्यादिभावेन पुरनिवासी पुरप्रेष्यो वेति

शूलपाणिः। परिविन्दन्नित्यत्र परेर्लक्षणार्थत्वात् सर्वत्र द्वितीया। एतेषामाधानाद्यधिकाराभावादेव न दोष इति मदनपारिजातः।

धनस्य वार्द्धुषिको धनवार्द्धुषिकः। संबन्धलक्षणा षष्ठी। वार्द्धुषिकश्च, समर्घं धनमुद्धृत्य महार्घं यः प्रयच्छति। स वै वार्द्धुषिको नाम ब्रह्मवादिषु गर्हित इति स्मृत्युक्तः। धनपदञ्च, यस्तु निन्देत् परं जीवन् प्रशंसत्यात्मनो गुणान्। स वै वार्द्धुषिको-नाम सर्वकर्म्मसु गर्हित इति विष्णूक्तवार्द्धुषिकान्तरव्यवच्छेदार्थम्। विवाहादौ त्वरावान् कनिष्ठो धनवार्द्धुषिकं राजसेवकं कर्षकं प्रोषितञ्च जेष्ठं वर्षत्रयमपि प्रतीक्षेत। प्रोषिते विशेष-माह प्रोषितं यदीति। अशृण्वानं व्यत्ययेनाश्रूयमाणमिति नारायणोपाध्यायाः। रत्नाकरकल्पतरुश्चशृण्वान इति पठितम्। प्रोषितस्य कल्याणप्रवृत्तिमनुपलभमानः कनिष्ठो वर्षादूर्द्धं यदि विवाहादिकमाचरति,तदा त्वागते पुनर्ज्येष्ठे तत्पापशुद्धये परिवेदन-प्रायश्चित्तस्य पादं चरेत्। वार्त्ताश्रवणे तु वर्षत्रयं प्रतीक्षेतैव। विरक्तवेश्याऽतिसक्तादिषु तु चिरकालानुवृत्त्या विवाहसम्भावना-निवृत्तावधिवेदनं न दोषाय तत्र कालावधेरश्रुतत्वादिति माध-वाचार्य्याः। विरक्तवेश्याऽतिसक्तादिष्वपि कियन्तमपि कालं तथैवावस्थितेषु तत्स्वभावत्वावधारणेन विवाहसम्भावनानिवृत्तौ तदुत्तरकालं कनिष्ठेन विवाहादौ क्रियमाणे न दोष इति हेमाद्रिः।

सुमन्तुः। व्यसनासक्तचित्तो वा नास्तिको वाऽथवाऽग्रजः। कनीयान् धर्मकामस्तु आधानमथ कारयेत्। विवाहमन्तरे-णेदानीमाधानासम्भवात्, बहूनामेकधर्म्मिणामेकस्यापि यदुच्यते। सर्वेषामेव तत् कुर्य्यादेकरूपाहि ते स्मृता इति बौधायनवचनाच्च

विवाहकरणेऽपि न दोषः। निर्णयसिन्धौ मनुः। षण्ढान्धबधिरादीनां विवाहोऽस्ति यथोचितम्। विवाहासम्भवे तेषां कनिष्ठो-विवहेत्तदा। पितृव्यपुत्रे सापत्ने परनारीसुतेषु च। विवाहाधानयज्ञादौ परिवेदो न दूषणम्। पराशरः। कुब्जवामनषण्ढेषु गद्गदेषु जड़ेषु च। जात्यन्धे बधिरे मूके न दोषः परिवेदने। पितृव्यपुत्रः सापत्नः परनारीसुतस्तथा। दाराग्निहोत्रसंयोगे न दोषः परिवेदने। जात्यन्धोजन्मान्धः। यमः। पितृव्यपुत्रान् सापत्नान् परपुत्रांस्तथैव च। दाराग्निहोत्रधर्म्मेषु नाधर्म्मः परिवेदने। परपुत्रा दत्तकादयः। शातातपः। क्लीबे देशान्तरगते पतिते भिक्षुकेऽपि वा। योगशास्त्राभियुक्ते च न दोषः परिवेदने। योगशास्त्राभियुक्ते विरक्ते। क्लीबादौ कालप्रतीक्षा नास्तीत्याह चतुर्वर्गचिन्तामणौ स्मृतिः। उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीब एव वा। राजयक्ष्मामयावी च न न्याय्यः स्यात् प्रतीक्षितुम्।

देशान्तरगते विशेषस्तत्रैव। द्वादशैव तु वर्षाणि ज्यायान् धर्म्मार्थयोगतः। न्याय्यः प्रतीक्षितुं भ्राता श्रूयमाणः पुनः पुनः। वशिष्ठस्येदमिति शूलपाणिः। गौतमः। नष्टे भर्त्तरि षाड्वार्षिकं क्षपणं श्रूयमाणेऽभिमुखगमनं प्रव्रजिते तु निवृत्तिः प्रसङ्गात्तस्य द्वादशवर्षाणि ब्राह्मणस्य विद्यासंबन्धे भ्रातरि चैवं ज्यायसि यवीयान् कन्याऽग्न्युपयमेषु षड़ित्येके। नष्टे कुत्र गत इत्यज्ञाते। क्षपणं प्रतीक्षा। श्रूयमाणे तु भर्त्तरि भर्त्रभिमुखगमनं कार्य्यं, कृतसन्न्यासे पुनर्भर्त्तरि तस्य भर्त्तुः प्रसङ्गादभिमुखगमनरूपान्निवृत्तिः। विद्यार्थं प्रोषितस्य तु ब्राह्मणस्य द्वादशवर्षाणि क्षपणम्। एवं स्त्रियाः कर्त्तव्यमभिधाय, यवीयसि भ्रातरि तदतिदिशति, भ्रातरि चैवमिति। नष्टे

ज्यायसि कन्याग्न्युपयमेषु षाड्वार्षिकं चपणं श्रूयमाणे तदभि-
मुखगमनं प्रव्रजिते तत्प्रसङ्गान्निवृत्तिः विद्यार्थं प्रोषिते द्वादश-
वर्षाणि चपणमित्यतिदेशार्थः। अत्रैव मतान्तरमाह, षड़ित्येके
इति। विद्यार्थं प्रोषिते षड्वर्षाणि चपणमित्येकेषां मतम्।
स्त्रियास्तु नैतत्, तस्याः सामान्यतः षाड्वार्षिकं विद्यासंबन्धे
द्वादशवार्षिकञ्च चपणमभिधाय, यवीयसः कन्याऽग्न्युपयमेषु
तत् सर्व्वमतिदिश्य षड़ित्येके इत्यभिधानात्तथाऽवगतेः। तदत्र
विद्यासंबन्धादन्यत्र धर्म्मधनार्थं प्रोषितेऽपि षाड्वार्षिकं चपण-
मित्युक्तम्।

स्त्रियास्तु यथोक्तकालप्रतीक्षाऽनन्तरमन्यसमाश्रयणं नारदः
स्मरति। यथा। अष्टौ वर्षाण्युदीक्षेत ब्राह्मणी प्रोषितं पतिम्।
अप्रसूता तु चत्वारि परतोऽन्यं समाश्रयेदिति। सोऽयं प्रतीक्षाकाल-
विकल्पोवचनादभ्युपगन्तव्यः। तत्र ब्राह्मण्या अष्टवर्षप्रतीक्षणं
भर्त्तुर्वार्त्ताऽनुपलब्धौ बोद्धव्यम्। जीवति श्रूयमाणे तु स्यादेष
द्विगुणोविधिः। अप्रवृत्तौ तु भूतानां दृष्टिरेषा प्रजापतेरिति
तेनैवोपसंहृतत्वात्। प्रवृत्तिर्वार्त्ता। प्रायश्चित्तविवेककृद्भिस्तु, विद्यार्थं
प्रोषितस्य ब्राह्मणस्य दारा अपत्योत्पादनार्थं तदभिगमने द्वादश-
वर्षाणि प्रतीक्षेरन्निति व्याख्यातम्। तथा वशिष्ठोऽपि। प्रोषित-
पत्नी पञ्च वर्षाण्युपासीत ऊर्द्ध्वं पतिसकाशं गच्छेदित्याह। चतु-
र्वर्गचिन्तामणौ तु, विद्याग्रहणार्थं देशान्तरगते भर्त्तरि ब्राह्मण-
भार्य्यया द्वादशवर्षाणि प्रतीक्ष्य तत्क्रियादिकं कार्य्यमित्युक्तम्।

वशिष्ठः। अष्टौ दश द्वादश वर्षाणि ज्येष्ठं भ्रातरमनिविष्टमप्रती
क्षमाणः प्रायश्चित्ती भवति। अनिविष्टमकृतविवाहमिति माध-
वाचार्य्याः। खादिरे बध्नाति पालाशे बध्नाति रोहितके बध्नातीति-

वदष्टवर्षादीनां विकल्पः। तत्र पुनः पुनः श्रूयमाणे ज्येष्ठे द्वादश वर्षाणि प्रतीक्षणं पूर्वमुक्तम्। अश्रूयमाणे वर्षमात्रं प्रतीक्ष्य कनिष्ठस्य विवाहे पादप्रायश्चित्तञ्चोक्तम्। एवञ्च श्रूयमाणएव ज्येष्ठे श्रवणतारतम्यादष्टौ दश वा वर्षाणि प्रतीक्षणमिति प्रतीयते। तत्रैव च्छन्दोगपरिशिष्टोक्तं वर्षत्रयप्रतीक्षणमनुकल्पः, वर्षत्रयमपीत्यपिकारेण निर्देशात्। यत्तु, एतत् त्र्यब्दप्रतीक्षणं विद्याधर्म्मधनेतरार्थप्रोषितपरं वशिष्ठगौतमवचनादिति तत्त्वकृद्भिरुक्तम्। तच्चिन्त्यम्। वर्षत्रयमपीत्यपिकारलभ्यस्य तदूर्द्ध्वकालविशेषप्रतीक्षणस्य तत्र प्रमाणाभावात्। विद्याधर्म्मधनेतरार्थप्रोषितस्य व्यसनासक्ततया तत्र कालप्रतीक्षाया अभावाच्च। राजाज्ञादिभिः प्रोषितस्य धनाद्यर्थत्वोपपत्तेः क्वचिद्व्यसनासक्तत्वोपपत्तेश्च। एवञ्च यत्रैवाधिककालप्रतीक्षोक्ता तत्रैव त्वरायां त्र्यब्दप्रतीक्षणमित्यादरणीयम्। यदपि ब्राह्मणस्य द्वादशवार्षिकं क्षत्रियस्य दशवार्षिकं वैश्यस्याष्टवार्षिकं शूद्रस्य तु षाड्वार्षिकं क्षपणं गौतमेन समान्येनाभिधानादिति प्रायश्चित्तविवेककृद्भिरुक्तम्। तदपि चिन्त्यम्। दशवर्षादीनां क्षत्रियादिविषयत्वे प्रमाणाभावात्। गौतमोक्तस्य षाड्वार्षिकक्षपणस्य द्वादशवार्षिकवैकल्पिकतयोक्तत्वाच्च।

न च, अष्टौ वर्षाण्युदीक्षेतेति वचनानन्तरं, क्षत्रिया षट् समास्तिष्ठेदप्रसूता समात्रयम्। वैश्याऽप्रसूता चत्वारि द्वे वर्षे त्वितरा वसेदिति नारदेन प्रोषितभर्त्तृकाणां ब्राह्मणीक्षत्रियावैश्यानामुत्तरोत्तराल्पाल्पकालप्रतीक्षाविधानात् प्रोषिते ज्येष्ठे कनिष्ठस्यापि तथा कल्प्यते इति वाच्यम्। मानाभावात्। नारदेन गौतमवत् कनिष्ठस्य तदनतिदेशात्। न शूद्रायाः स्मृतः काल-

एष प्रोषितयोषितामिति तदुत्तरार्द्धेन प्रोषितभर्त्तृकायाः शूद्रायाः प्रतीक्षाकालनिषेधेन शूद्रकनिष्ठस्यापि तथात्वापत्तेश्च। न चैवमेवास्त्विति वाच्यम्। वशिष्ठादिभिः समान्येन कालप्रतीक्षोपदेशेन कल्पनाऽनवकाशात्।

न चाग्निसमभिव्याहारेण परिवेदनदोषस्योक्तत्वात् शूद्रस्य चाग्न्यभावात् त्रैवर्णिकानामेव परिवेदनदोषो न शूद्रस्येति वाच्यम्। शूद्रस्यापि विवाहविधानात्। यस्य यत्राधिकारस्तस्य तत्र दोषोपपत्तेः। हारीतादिभिः सामान्येन विवाहे परिवेदनदोषस्योक्तत्वाच्च। तस्मादविशेषेणैव सर्वेषां कनिष्ठानां द्वादशवर्षादिप्रतीक्षणमित्यास्थेयम्। यद्यपि शूद्रस्याग्न्यानधिकारपक्षे न तस्य परिवेदनदोषसम्भवस्तथापि तदधिकारपक्षे तस्यापि तत्सम्भवो द्रष्टव्यः।

अदृष्टार्थमर्थार्थं वा द्वादशवर्षप्रतीक्षणं देशान्तरगतज्येष्ठविषयं अष्टौ दशेति पक्षद्वयं कार्य्यान्तरार्थं देशान्तरगतविषयमिति माधवाचार्य्याः। तच्चिन्त्यम्। विद्यार्थं देशान्तरगतेऽपि द्वादशवर्षप्रतीक्षाया उक्तत्वात्। हेमाद्रिस्तु, धर्म्मार्थमर्थार्थं वा देशान्तरगतस्य ज्येष्ठस्य द्वादशवर्षं प्रतीक्षा इत्यभिधाय, ब्राह्मणः ज्येष्ठे भ्रातरि विद्याग्रहणार्थं देशान्तरगते द्वादशवर्षाणि प्रतीक्ष्य विवाहाग्न्याधाने कुर्य्यात् कार्य्यान्तरार्थं देशान्तरगते तु अष्टौ दशवेति पक्षद्वयम्। अत्रेदं विवक्षितम्। देशान्तरगतस्य स्वाभिमतं कार्य्यं निर्वर्त्त्य प्रत्यागमनयोग्ये कालेऽप्यनागतस्य जीवितसन्देहे सति विवाहसम्भावनानिवृत्तौ तदुत्तरकालं कनिष्ठेन दाराग्निहोत्रसंयोगे क्रियमाणे न परिवेत्तृत्वरूपो दोषो भवतीत्याह।

ज्येष्ठस्याधानानधिकारे कनिष्ठस्याग्न्याधाने न दोषः। संन्यस्तच्छिन्नहस्तादौ यद्वा षण्ढादिदूषणे। जनके सोदरे ज्येष्ठे

कुर्य्यादेवेतरः क्रियामिति त्रिकाण्डमण्डनोक्तेः। शरीरकार्श्यस्याविप्रतिषिद्धमिति हिरण्यकेशिसूत्रे कार्श्यस्याविप्रतिषेधेन हीनाङ्गस्य प्रतिषेधावगतेश्च। यद्यपि लाट्यायनद्राह्यायणाभ्यां, ऋत्विगार्षेयोऽनूचानः साधुचरणो वाग्ग्म्यन्यूनाङ्गोऽनतिरिक्ताङ्गो द्वयसतश्चानतिकृष्णोऽनतिश्वेत इति सूत्रेण ऋत्विग्लक्षणमभिधाय, याज्यश्च प्रथमैस्त्रिभिर्गुणैर्व्याख्यात इति तत्परसूत्रेण न्यूनाङ्गस्यापि याज्यत्वमुक्तम्। तथापि यदङ्गवैकल्ये क्रियैव न निर्वहति तदङ्गहीनस्याधिकारो न भवत्येव। ऋषेरपत्यमार्षम्। आ दशमात् पुरुषादव्यवच्छिन्नमार्षं यस्य स आर्षेय इति लाट्यायनभाष्यम्। साधुचरणः साध्वाचारः। प्रमाणे द्वयं समं यस्य स द्वयसतः। पृषोदरादित्वात् साधुः। नाभेरूर्द्धमधश्च समप्रमाण इत्यर्थः। द्वेसतश्चेति पाठे, अधस्तोर्द्ध्वञ्च नाभेस्तु समो यः स्यात् प्रमाणतः। पादाङ्गुष्ठाङ्गविष्टब्धः स वै द्वेसत उच्यते। इतिकारिकया वर्णितोऽर्थः। याज्यश्चैवंलक्षणः, यादृग्लक्षणा ऋत्विजस्तादृशलक्षण इत्यर्थः। प्रथमैर्वा त्रिभिर्गुणैर्व्याख्यातः। लुप्तविभाषं सूत्रमित्यग्निस्वामिनः। एतद्व्याख्यायान्तु हीनाङ्गस्याधिकारविकल्पएव। तत्राप्युक्तैव गतिः।

अग्रजस्यानग्नित्वेऽपि तदनुमत्याऽनुजस्याधाने दोषोनेत्याह वृद्धवशिष्ठः। अग्रजश्च यदाऽनग्निरादध्यादनुजः कथम्। अग्रजानुमतः कुर्य्यादग्निहोत्रं यथाविधि। सुमन्तुः। ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव कारयेत्। अनुज्ञातस्तु कुर्व्वीत शङ्खस्य वचनं यथा। शातातपः। नाग्नयः परिविन्दन्ति न वेदा न तपांसि च। न च श्राद्धं कनिष्ठस्य या च कन्या विरूपिका। एतदपि ज्येष्ठानुमत्यैव, पूर्व्वोक्तवचनाभ्याम्। अत्र वेदादिकीर्त्तनात्तान्यपि परि

वेदनाय भवन्तीत्यवगम्यते। ज्येष्ठातिक्रमस्य सर्व्वत्राविशेषात्। हेमाद्रिस्तु, यथा वेदाध्ययनतपःश्राद्धराद्धित्वेन स्थितेऽपि ज्येष्ठे तानि तदनुज्ञामन्तरेणापि कनिष्ठेनानुष्ठितानि परिवेदनहेतवो न भवन्ति तथा ज्योष्ठानुज्ञयाऽग्नयोऽप्याधीयमानाः परिवेदनहेतवो-न भवन्तीति व्याख्यातवान्।

न चाधिकारिणो ज्येष्ठस्य स्वेच्छयाऽग्न्याधानमकुर्वाणस्य कामतोऽकारित्वेनैव कनिष्ठस्याग्न्याधाने दोषाभावात् पृथग्वच-नारम्भोऽनर्थक इति वाच्यम्। तद्वचनस्योद्वाहविषयत्वात्। तथैव हेमाद्रिमाधवाचार्य्यादिभिर्व्याख्यातत्वात्। अतएवाभिवृद्धानभार्य्यां-श्चेति तत्रोक्तम्। तद्वचनस्याधानोद्वाहोभयविषयत्वेऽपि मुनिभदाद-दोषोपपत्तेश्च। न च तथापि कथमनुज्ञाऽपेक्षेति वाच्यम्। वचन-प्रामाण्यात् कामतोऽकारिणोऽपि ज्येष्ठस्यानुमत्यैव कनिष्ठस्याधाने बाधकाभावात्। सत्यामपीच्छायां कुतश्चित् कारणात् ज्येष्ठ-स्याधानविलम्बे तदनुज्ञया कनिष्ठस्याधानपरत्वसम्भवाच्च।

विवाहस्तु ज्येष्ठानुज्ञयाऽपि नेत्याह हारीतः। सोदराणान्तु सर्व्वेषां परिवेत्ता कथं भवेत्। दारैस्तु परिविन्दन्ते नाग्निहोत्रेण नेज्यया। अग्निहोत्रादिष्वनुज्ञया न परिविन्दन्ते इति स्थितं, दारैः पुनरनुज्ञयाऽपि परिविन्दन्ते इति वचनार्थ इति हेमाद्रिः। छन्दोगपरिशिष्टं कात्यायनः। नाग्नयः परिविन्दन्ति न यज्ञा न तपांसि च। दारैस्तु परिविन्द्यं स्यात् पृथग्धर्म्मा हि ब्राह्मणाः। पूर्व्ववदत्रापि ज्येष्ठस्यानुज्ञया कनिष्ठस्य विवाहसम्भावनाऽनु-सन्धेया।

अथ स्नातकव्रतानि। तत्र प्रायेण मानवान्येव वाक्यानि लिख्यन्ते। अतोऽन्यतमया वृत्त्या जीवंस्तु स्नातकोद्विजः। स्वर्ग्या-

युक्तयज्ञस्यानि व्रतानीमानि धारयेत् । वृत्तिर्जीवनोपायः । अन्यतमया वृत्त्या ऋतामृताभ्यामित्याद्युक्तवृत्तीनां कयाचिद्वृत्त्या । तद्यथा । ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा । सत्यानृताख्यया वाऽपि न श्ववृत्त्या कदाचन । ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् । मृतन्तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम् । सत्यानृतन्तु वाणिज्यं तेन चैवापि जीव्यते । सेवा श्ववृत्तिराख्याता तस्मात् तां परिवर्ज्जयेत् । अबाधितस्थानेषु पथि वा क्षेत्रेषु वाऽप्रतिहतावकाशेषु यत्र यत्रौषधयोविद्यन्ते तत्र तत्राङ्गुलीभ्यामेकैकं कणं समुच्चयित्वेत्यादि बौधायनदर्शनादेकैकधान्यादिगुडकोच्चयनमुञ्छः, मञ्जर्य्यात्मकानेकधान्योच्चयनं शिलः, तयोर्द्वन्द्वैकवद्भावः । स्पष्टमन्यत् । स्नातकः कृतसमावर्त्तनस्नानः ।

वेदोदितं स्वकं कर्म्म नित्यं कुर्य्यादतन्द्रितः । तद्धि कुर्व्वन् यथाशक्ति प्राप्नोति परमां गतिम् । नेहेतार्थान् प्रसङ्गेन न विरुद्धेन कर्म्मणा । न विद्यमानेष्वर्थेषु नार्त्त्यामपि यतस्ततः । प्रसज्यते यत्र पुरुषः स प्रसङ्गो गीतवादित्रादिस्तत्र हि रागिणः सज्जन्ति । तेन गीतादिनाऽर्थान् नोपार्जयेत् । विरुद्धेन शास्त्रनिषिद्धेनायाज्ययाजनादिना । अकुलोचितेनापीति मेधातिथिः । विद्यमानेषु पित्राद्यागतेष्वर्थेषु । आर्त्त्यामापद्यपि यतस्ततः पतितादेरर्थान्नेहेत ।

इन्द्रियार्थेषु सर्वेषु न प्रसज्येत कामतः । अतिप्रसक्तिञ्चैतेषां मनसा संनिवर्त्तयेत् । सर्वान् परित्यजेदर्थान् स्वाध्यायस्य विरोधिनः । यथा तथा जीवयंस्तु सा ह्यस्य कृतकृत्यता । स्वाध्यायो वेदाध्ययनं, तद्विरोधिनोऽर्था राजामात्यगृहावस्थानकृषिवाणिज्यादयः । येन केनापि पोष्यवर्गमात्मानञ्च जीवयन् तान् परि-

त्यजेत्। यतः सैव स्वाध्यायएवास्य स्नातकस्य कृतकृत्यता। विधेयप्राधान्यविवक्षया स्त्रीत्वेन निर्देशः। वयसः कर्म्मणोऽर्थस्य श्रुतस्याभिजनस्य च। वेशवाग्बुद्धिसारूप्यमाचरन् विचरेदिह। वेशवाग्बुद्धीति लुप्तविभक्तिकं पदं, सारूप्यमौचित्यम्। वयः प्रभृतीनामौचित्यमाचरन्नित्यर्थः। वयोबुद्ध्यर्थवाग्वेशश्रुताभिजनकर्म्मणाम्। आचरेत् सदृशीं वृत्तिमजिह्मामशठां तथेति याज्ञवल्क्यस्मरणात्। सदृशीमनुरूपाम्। तद्यथा। बालः पांशुक्रीड़ां, युवा स्रगन्धादिसेवनं, वृद्धोधर्म्मार्थसाधनं, बुद्धिमान् मीमांसादिश्रवणम्, अर्थवान् वसुदानं, वाग्मी दौत्यं, सुवेशो राजसन्निधिं, श्रुतेन व्याकरणादिना अर्थवेत्ता वेदार्थनिरूपणं, विशुद्धकुलजन्मवान् तथाविधकन्योद्वहनं, यागवान् पशुहिंसनमिति तत्त्वकृतः। वयआद्युचिता वेशवाग्बुद्धयः कर्त्तव्याः। तत्र प्रथमे वयसि शिखण्डकः यौवने कौन्तलादिधारणं वार्द्धके जटामुण्डनादीति मेधातिथिः। स्नातकव्रतमध्ये पाठात् बाल्यस्योदाहरणं चिन्तनीयम्।

अन्ये तु व्याचक्षते। वेशवाग्बुद्धीति समाहारद्वन्द्वः, वयःप्रभृतीनां सारूप्यं यथा भवति तथा वेशं वाक्यं बुद्धिञ्चाचरेत्, यथा यौवने स्रग्गन्धलेपनादिधारणं त्रिवर्गानुसारिणी वाग्बुद्धिश्च। एवं कर्म्मादिष्वप्युन्नेयमिति।

मनुः। बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च। नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान्। बुद्धिवृद्धिकराणि मीमांसादीनि। धन्यानि धनाय हितान्यर्थशास्त्राणि। हितानि दृष्टार्थानि ज्योतिषादीनि। वैदिकान् निगमान् मन्त्रब्राह्मणादीन्, निघण्टुनिरुक्तादीन् वा। न सीदेत् स्नातको विप्रः क्षुधा शक्तः कथञ्चन। न जीर्णमलवद्वासा भवेच्च विभवे सति। क्लृप्तकेश-

नखश्मश्रुर्दान्तः शुक्लाम्बरः शुचिः । स्वाध्याये चैव युक्तः स्यान्नित्य-मात्महितेषु च । कल्पनं छेदनम् । दान्तो दर्परहितः । वैणवीं धारयेत् यष्टिं सोदकञ्च कमण्डलुम् । यज्ञोपवीतं वेदञ्च शुभे रौक्मे च कुण्डले । कमण्डलुधारणं कलौ निषिद्धं, धारणञ्च कमण्डलो-रिति कलिनिषिद्धमध्ये पाठात् । वेदोदर्भमुष्टिः ।

नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन । नोपसृष्टं न वारिस्थं न मध्यं नभसोगतम् । उपसृष्टमुपरक्तम् । न लङ्घयेद्वत्सतन्त्रीं न प्रधा-वेच्च वर्षति । न चोदके निरीक्षेत स्वं रूपमिति धारणा । वत्सतन्त्रीं वत्सबन्धनार्थां रज्जुम् । मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम् । प्रदक्षिणानि कुर्व्वीत प्रज्ञातांश्च वनस्पतीन् । प्रज्ञातान् जम्बी उदुम्बर इत्यादिश्रुतिप्रसिद्धान् । नोपगच्छेत् प्रमत्तोऽपि स्त्रिय-मार्त्तवदर्शने । समानशयने चैव न शयीत तया सह । आर्त्तवदर्शने इत्येतदुत्तरत्राप्यन्वेति । मध्यपठितस्य विशेषाभावात् । नाश्नीया-द्भार्य्यया सार्द्धं नैनामीक्षेत चाश्नतीम् । क्षुवतीं जृम्भमाणां वा न चासीनां यथासुखम् । विवाहादौ तु कस्याञ्चिदवस्थायां भार्य्यया सह भोजनं पूर्व्वमुक्तम् । स्नातकव्रतञ्चैतदिति स्मर्त्तव्यम् । नाञ्जयन्तीं स्वके नेत्रे न चाभ्यक्तामनावृताम् । न पश्येत् प्रसवन्तीं च तेजस्कामो द्विजोत्तमः । नान्नमद्यादेकवासा न नग्नः स्नान-माचरेत् । तथा । नाग्निं मुखेनोपधमेन्नग्नां नेक्षेत च स्त्रियम् । नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत् । अधस्तान्नोपदध्याच्च न चैनमभिलङ्घयेत् । न चैनं पादतः कुर्य्यान्न प्राणाबाधमाचरेत् ।

नाग्निं मुखेनोपधमेदिति लौकिकाग्निविषयम् । मुखेनैके धमन्त्यग्निं मुखाद्ध्येषोऽध्यजायत । नाग्निं मुखेनेति च यल्लौ-किके योजयन्ति तदिति छन्दोगपरिशिष्टात् । यस्मादेषोऽग्निः

प्रजापतेर्मुखादुत्पन्नस्तस्मान्मुखेनाग्निमेके धमन्ति। प्रजापतेर्मुखादग्नेरुत्पत्तिश्च ताण्ड्ये ब्राह्मणे समाम्नायते। सोऽकामयत यज्ञं सृजेयेति स मुखतएव त्रिवृतमसृजत तं गायत्री च्छन्दोऽन्वसृज्यताग्निर्देवता ब्राह्मणो मनुष्यो वसन्त ऋतुस्तस्मात् त्रिवृत् स्तोमानां मुखं गायत्री च्छन्दसामग्निर्देवतानां ब्राह्मणो मनुष्याणां वसन्तऋतूनां तस्माद्ब्राह्मणो मुखेन वीर्य्यं करोति मुखतो हि सृष्टइति। मुखादग्निश्च वायुश्चेति च पौरुषे सूक्ते। यत्तु, मुखान्मुखपाठ्यमन्त्रादेष संस्कृतोऽग्निरजायतेति तत्त्वकृद्भिर्व्याख्यातम्। तदुक्तश्रुत्यनवलोकनेन। आधानसंस्कृतादन्योऽग्निर्लौकिकइति वाचस्पतिमिश्रप्रभृतयः। आधानसंस्कृताग्न्युपक्रमे मुखेनैके धमन्त्यग्निमित्याद्यभिधानात्तथाऽवगतेः। अग्निस्तु नामधेयादौ होमे सर्व्वत्र लौकिक इति च्छन्दोगपरिशिष्टएवाधानसंस्कृतादन्यस्य संस्कृतस्याप्यग्नेर्लौकिकशब्देन परामर्शाच्च। तत्त्वकृतस्तु संस्कारतत्त्वे संस्कृताग्निमात्रस्यालौकिकत्वमभ्युपगच्छन्तोऽप्युद्वाहतत्त्वादौ पैतृयज्ञियहोमस्य लौकिकाग्नौ निषेधादन्वष्टकायामनग्नीनामनधिकार इति वाचस्पतिमिश्रमतमेव कथमनुगच्छन्तीति न खल्वधिगच्छामि। तन्मते लौकिकस्याप्यग्नेः संस्कारानन्तरं लौकिकत्वाभावात्। वाचस्पतिमिश्रमते त्वेतदेवं स्यात्। तन्मते लौकिकस्याग्नेः संस्कारानन्तरमपि लौकिकत्वानपायादिति धेयम्। प्राणाबाधं प्राणपीड़ाकरमतिश्रमादिकम्।

नाश्नीयात् सन्धिवेलायां न गच्छेन्नापि संविशेत्। न चैव प्रलिखेद्भूमिं नात्मनोपहरेत् स्रजम्। संवेशः शयनम्। स्रजमात्मनः सकाशान्नापनयेत्। अर्थादपनयनकालेऽन्येनापनयेदिति मेधातिथिप्रभृतयः। नाप्सु मूत्रं पुरीषं वा ष्ठीवनं वा समुत्सृजेत्। अमेध्यलिप्त-

मन्यद्वा लोहितं वा विषाणि वा। नैकः स्वप्यात् शून्यगेहे श्रेयांसं न प्रबोधयेत्। नोदक्ययाऽभिभाषेत यज्ञं गच्छेन्न चावृतः। श्रुतादिभिः श्रेयांसं कनीयान् इदन्ते युक्तमिदमयुक्तमित्यादि नोपदिशेत् इति मेधातिथिः। वित्तविद्यादिभिरधिकञ्च सुप्तं न प्रबोधयेदिति कुल्लूकभट्टः। याज्ञवल्क्यस्त्वाह। जलं पिबेन्नाञ्जलिना शयानं न प्रबोधयेत्। नाचैः क्रीड़ेन्न धर्म्मघ्नैर्व्याधितैर्व्वा न संविशेदिति। उदक्या ऋतुमती। अवृतोऽकृतवरणो यज्ञं न गच्छेत्। गौतमस्तु, दर्शनार्थं काममित्यनेन दर्शनार्थं गमनमनुजानाति।

मनुः। अग्न्यगारे गवां गोष्ठे ब्राह्मणानाञ्च सन्निधौ। स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत्। उद्धरेद्वाससोवहिः कुर्य्यात्। न वारयेद्गां धयन्तीं न चाचक्षीत कस्यचित्। न दिवीन्द्रायुधं दृष्ट्वा कस्यचिद्दर्शयेद्बुधः। धयन्तीं पयः क्षीरं वा पिबन्तीं न निवारयेत्। दोहनार्थनिवारणादन्यत्रायमुपदेश इति केचित्। नाधार्म्मिके वसेद्ग्रामे न व्याधिबहुले भृशम्। नैकः प्रपद्येताध्वानं न चिरं पर्व्वते वसेत्। न भुञ्जीतोद्धृतस्नेहं नातिसौहित्यमाचरेत्। नातिप्रगे नातिसायं न सायं प्रातराशितः। सौहित्यं तृप्तिः। विष्णुपुराणे। जठरं पूरयेदर्द्धमन्नैर्भागं जलेन च। वायोः सञ्चरणार्थन्तु चतुर्थमवशेषयेत्। अतिप्रगे प्राह्णे प्रथमोदितएव सूर्य्ये न भुञ्जीत। प्रहरेऽतीते क्षमानां पूर्व्वाह्णे, इतरेषां मध्याह्ने इति मेधातिथिः। प्रातर्भोजनेनातितृप्तः सायं न भुञ्जीत। याज्ञवल्क्यस्तु। उपास्य पश्चिमां सन्ध्यां हुत्वाऽग्नींस्तानुपास्य च। भृत्यैः परिवृतो भुक्त्वा नातितृप्तोऽथ संविशेदिति रात्रावल्पं भोजनमाह।

मनुः। न कुर्व्वीत वृथा चेष्टां न वार्य्यञ्जलिना पिबेत्।

नोत्सङ्गे भक्षयेद्भक्ष्यान् न जातु स्यात् कुतूहली। असति प्रयोजने किमेतत् स्यादिति निश्चयेऽत्यर्थमुत्कलिका कुतूहलम्। न नृत्ये-दथवा गायेन्न वादित्राणि वादयेत्। नास्फोटयेन्न च क्ष्वेडेन्न च रक्तो-विरावयेत्। आस्फोटनं पाणिना बाह्वौ ध्वनिकरणम्। अव्यक्तदन्त-शब्दः क्ष्वेडनम्। विरावोरासभादिशब्दकरणम्। विरोधयेदिति पाठे व्यक्तोऽर्थः। न पादौ धावयेत् कांस्ये कदाचिदपि भाजने। न भिन्नभाण्डे भुञ्जीत न भावप्रतिदूषिते। यत्र मनोविचिकित्सति तद्भावप्रतिदूषितम्। उपानहौ च वासश्च धृतमन्यैर्न धारयेत्। उपवीतमलङ्कारं स्रजं करकमेव च। करकं कमण्डलुम्। बाला-तपः प्रेतधूमोवर्ज्यं भिन्नं तथाऽऽसनम्। न च्छिन्द्यान्नखलोमानि दन्तैर्नोत्पाटयेन्नखान्। प्रथमोदिते सवितरि मुहूर्त्तत्रयं बालातप-व्यपदेश इति मेधातिथिः। कन्यार्कातप इत्यन्ये। नखानि रोमानि च न च्छिन्द्यात् स्वयं व्यसनेन, अतिप्रवृद्धानि तु नापितेन कारयेदिति केचित्। अन्ये तु, नखरोमाणि दन्तैर्न च्छिन्द्यादित्याहुः।

न मृल्लोष्टञ्च मृद्नीयान्न च्छिन्द्यात् करजैस्तृणम्। न कर्म्म निष्फलं कुर्य्यान्नायत्यामसुखोदयम्। आयतिरुत्तरकालः। न विगर्ह्य कथां कुर्य्याद्बहिर्माल्यं न धारयेत्। गवां च यानं पृष्ठेन सर्व्वथैव विगर्हितम्। अभिनिवेशेन पणबन्धादिना यल्लौकिकेषु शास्त्रीयेषु वाऽर्थेष्वितरेतरजल्पनमाहोपुरुषिका या सा विगर्ह्यकथेति मेधा-तिथिः। वाससोबहिर्माल्यं न धारयेत् कण्ठस्थां स्रजं वाससाऽऽ-च्छादयेदित्येके। बहिरित्यनावृतो देश उच्यते। तत्र नगररथ्यादौ न प्रकटमाल्यो भ्रमेदित्यन्ये। केशकलापाद्बहिर्माल्यं न धारये दित्यपरे। बहिर्माल्यं गन्धवहिर्भूतां मालां न धारयेत्, नागन्धां स्रजं धारयेदन्यां हिरण्यस्रज इति गोभिलोक्तेरित्यप्याहुः।

मनुः। अद्वारेण च नातीयाद्ग्रामं वा वेश्म वाऽऽवृतम्। रात्रौ च वृक्षमूलानि दूरतः परिवर्ज्जयेत्। आवृतं प्राचीराद्यावृतम्। नाक्षैः क्रीड़ेत् कदाचित्तु स्वयं नोपानहौ हरेत्। न विण्मूत्रमुदीक्षेत न बाहुभ्यां नदीं तरेत्। अधितिष्ठेन्न केशांस्तु न भस्मास्थिकपालिकाः। न कार्पासास्थि न तुषान् दीर्घमायुर्जिजीविषुः। कपालिका भग्नस्य खण्डः। आयुर्जीवितकालः। दीर्घं जीवितकालं जिजीविषुरित्यर्थः।

न संहताभ्यां पाणिभ्यां कण्डूयेदात्मनः शिरः। न स्पृशेच्चैतदुच्छिष्टो न च स्नायाद्विना ततः। केशग्रहान् प्रहारांश्च शिरस्येतान् विवर्जयेत्। शिरःस्नातश्च तैलेन नाङ्गं किञ्चिदपि स्पृशेत्। अत्राप्यात्मन इति पूर्ववचनस्थमनुषज्यते। तदनुषङ्गेऽपि प्रहारसाहचर्यात् क्रोधनिमित्तस्य केशग्रहस्यायं वादः। सुरतसम्भोगे तु कामिन्याः केशग्रहेऽपि न व्रतलोपः। ब्राह्मे मुहूर्त्ते बुध्येत धर्म्मार्थौ चानुचिन्तयेत्। कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च। त्रियामाया रात्रेः परस्ताद्ब्राह्मोमुहूर्त्तः। रात्रेः पश्चिमोयामइत्यन्ये। धर्म्ममर्थञ्च परस्पराविरोधेनानुष्ठानार्थं चिन्तयेत्। धर्म्मार्थमूलान् कायक्लेशांश्च चिन्तयेत्। अनेनैतदुक्तं भवति। यदि महान् कायक्लेशोऽल्पश्च धर्म्मोऽर्थो वा तदा तं परित्यजेत्। वेदस्य तत्त्वार्थं कर्म्मब्रह्मलक्षणम्।

न स्नानमाचरेद्भुक्त्वा नातुरो न महानिशि। न वासोभिः सहाजस्रं नाविज्ञाते जलाशये। देवतानां गुरो राज्ञः स्नातकाचार्य्ययोस्तथा। नाक्रामेत् कामतश्छायां बभ्रुणो दीक्षितस्य च। बभ्रुः कपिलो वर्णः, तद्गुणयुक्तं द्रव्यं बभ्रु। तत्र गौः कपिला सोमलता वा, उभयोर्बभ्रुशब्देन वेदे प्रयोगदर्शनादिति मेधा-

तिथिः। मध्यन्दिनेऽर्द्धरात्रे च श्राद्धं भुक्त्वा च सामिषम्। सन्ध्ययोरुभयोश्चैव न सेवेत चतुष्पथम्। उद्वर्त्तनमपस्नानं विण्मूत्रे रक्तमेव च। श्लेष्मनिष्ठ्यूतवान्तानि नाधितिष्ठेत कामतः। उद्वर्त्तनमभ्यङ्गेन मलापकर्षणं पिष्टादि। अपस्नानं स्नानोपयुक्तमुदकम्। निष्ठ्यूतं चर्व्वितपरित्यक्तताम्बूलादि। अधिष्ठानं तदुपरि स्थितिः।

वैरिणं नोपसेवेत सहायं चैव वैरिणः। अधार्म्मिकं तस्करं च परस्यैव च योषितम्। क्षत्रियं चैव सर्पं च ब्राह्मणं च बहुश्रुतम्। नावमन्येत वै भूष्णुः कृशानपि कदाचन। नात्मानमवमन्येत पूर्व्वाभिरसमृद्धिभिः। आ मृत्योः श्रियमन्विच्छेन्नैनां मन्येत दुर्लभाम्। सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात् सत्यमप्रियम्। प्रियं च नानृतं ब्रूयादेष धर्म्मः सनातनः। भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वा वदेत्। शुष्कवैरं विवादञ्च न कुर्य्यात् केनचित् सह।

भद्रं भद्रमित्येवमादिना कल्याणं मङ्गलमित्यादिशब्देन भद्रशब्देनैव वा ब्रूयात्। गोभिलोऽपि, भद्रमित्येतां वृथावाचं परिहरेदित्याह। भद्रे खलु भद्रशब्दो यथार्थवचनः स्यात् अभद्रे तु भद्रशब्दो वृथैव भवति मिथ्याऽनृतमित्येतत्। तामेतां वृथावाचं परिहरेत्। अन्ये तु, प्रथमस्य भद्रशब्दस्य नञो लोपमभ्युपगच्छन्तो व्याचक्षते। यदभद्रं तदपि भद्रपर्य्यायेण भद्रशब्देन वा ब्रूयादिति। गौतमोऽपि, अधेनुं धेनुभव्येति ब्रूयादभद्रं भद्रमिति कपालं भगालमिति मणिधनुरितीन्द्रधनुरिति स्मरति। तथा पारस्करः। गर्भिणीं विजन्येति ब्रूयात् सकुलमिति नकुलं भगालमिति कपालं मणिधनुरितीन्द्रधनु.। शुष्कवैरं निष्प्रयोजनं वैरम्। धर्म्माधिकरणे विवादं च न कुर्य्यात्।

मनुः। नातिकल्यं नातिसायं नातिमध्यन्दिने स्थिते। नाज्ञा-

तेन समं गच्छेन्नैको न वृषलैः सह। हीनाङ्गानतिरिक्ताङ्गान् विद्याहीनान् वयोऽधिकान्। रूपद्रव्यविहीनांश्च जातिहीनांश्च नाक्षिपेत्। आक्षेपः कुत्सा। एतेषामेतैः शब्दैराह्वानमेव कुत्सेति मेधातिथिः। न स्पृशेत् पाणिनोच्छिष्टो विप्रो गोब्राह्मणानलान्। न चापि पश्येदशुचिः सुस्थो ज्योतिर्गणान् दिवि। अनातुरः स्वानि खानि न स्पृशेदनिमित्ततः। रोमाणि च रहस्यानि सर्व्वाण्येव विवर्जयेत्। खानि चक्षुरादीनीन्द्रियाणि।

मङ्गलाचारयुक्तः स्यात् प्रयतात्मा जितेन्द्रियः। जपेच्च जुहुयाच्चैव नित्यमग्निमतन्द्रितः। वेदाभ्यासेन सततं शौचेन तपसैव च। अद्रोहेण च भूतानां जातिं स्मरति पौर्व्विकीम्। दूरादावसथान्मूत्रं दूरात् पादावसेचनम्। उच्छिष्टान्नं निषेकं च दूरादेव समाचरेत्। निषेकः परिषेकः। उपयुक्तशेषस्य त्याजस्यायं दूरतोनिक्षेप उच्यते। तद्धि निषेकशब्देन प्रसिद्धतरमिति मेधातिथिः। मैत्रं प्रसाधनं स्नानं दन्तधावनमञ्जनम्। पूर्व्वाह्णएव कुर्व्वीत देवतानाञ्च पूजनम्। मैत्रः पायुरिति श्रुतेर्मित्रदेवताकपायुसंबन्धि शौचं मैत्रम्। तेनाकृतशक्ततोऽपि प्रातः पायुप्रक्षालनं कर्त्तव्यमितिमेधातिथिः। मैत्रं पुरीषोत्सर्गमित्यन्ये। प्रसाधनं केशरचनानुलेपनादि। स्नानं प्रातःस्नानं मैत्रादिसाहचर्य्यात्। एवञ्च प्रातःस्नानस्य पूर्व्वाह्णो गौणकालः। अतएव चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत्। तिलपुष्पकुशादीनि स्नानञ्चाकृत्रिमे जले इति दक्षोक्तेनाविरोध इति केचित्।

वस्तुतस्तु, स्नातकव्रतमेतदन्यदन्यथेति न कश्चिद्विरोधः। आवर्त्तनात्तु पूर्व्वाह्णो ह्यपराह्णस्ततः परमिति स्कन्दपुराणाद्युक्तपूर्वाह्णपरिग्रहे तु न विरोधगन्धोऽपि। आवर्त्तनं छायायाः

परिवर्त्तनम्। अतएव वशिष्ठः। अरुग् दिवाऽऽचरेत् स्नानं मध्याह्नात् प्रागविशेषतः। मध्याह्नपदमह्नोमध्यपरम्। मध्याह्ने सर्व्वदा यस्मान्मन्दीभवति भास्कर इति मत्स्यपुराणस्वरसात्। पूर्व्वाह्णएव कुर्व्वीतेत्येतच्च सामान्यतोऽभिधानं यस्य यत्र करणमुपदिष्टं न तदन्यथयति, किन्तु सर्व्वथा पूर्वाह्णएवामीषां करणमित्याह।

मनुः। दैवतान्यभिगच्छेत्तु धार्म्मिकांश्च द्विजोत्तमान्। ईश्वरं चैव रक्षार्थं गुरूनेव च पर्वसु। अभिवादयेद्वृद्धांश्च दद्याच्चैवासनं स्वकम्। कृताञ्जलिरुपासीत गच्छतः पृष्ठतोऽन्वियात्। श्रुतिस्मृत्युदितं सम्यङ्निबद्धं स्वेषु कर्म्मसु। धर्म्ममूलं निषेवेत सदाचारमतन्द्रितः। स्वेषु कर्म्मस्वध्ययनादिषु निबद्धमङ्गत्वेन संबद्धम्। आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः। आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम्। दुराचारो हि पुरुषो लोके भवति निन्दितः। दुःखभागी च सततं व्याधितोऽल्पायुरेव च। सर्वलक्षणहीनोऽपि यः सदाचारवान्नरः। श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति। यद्यत् परवशं कर्म्म तत्तद्यत्नेन वर्जयेत्। यद्यदात्मवशन्तु स्यात् तत् तत् सेवेत यत्नतः। यत् कर्म्म कुर्वतोऽस्य स्यात् परितोषोऽन्तरात्मनः। तत् प्रयत्नेन कुर्व्वीत विपरीतन्तु वर्जयेत्। आचार्य्यञ्च प्रवक्तारं पितरं मातरं गुरुम्। न हिंस्याद्ब्राह्मणान् गाश्च सर्व्वांश्चैव तपस्विनः। नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम्। द्वेषं दम्भञ्च मानं च क्रोधं तैक्ष्ण्यञ्च वर्ज्जयेत्।

परस्य दण्डं नोद्यच्छेत् क्रुद्धो नैव निपातयेत्। अन्यत्र पुत्रात् शिष्याद्वा शिष्ट्यर्थं ताड़येत्तु तौ। नोद्यच्छेत् नोत्क्षिपेत्। न कदाचित् द्विजे तस्माद्विद्वानवगुरेदपि। न ताड़येत् तृणेनापि न गात्रात् स्रावयेदसृक्। अवगोरणं दण्डोद्यमः। असृक् रुधिरम्।

अधार्मिको नरो योहि यस्य चाप्यनृतं धनम्। हिंसारतश्च यो नित्यं नेहासौ सुखमेधते। अनृतमनृतनिमित्तं, साक्ष्यादावनृतमुक्त्वोत्कोचं यो गृह्णातीत्यर्थः। न सीदन्नपि धर्म्मेण मनोऽधर्मे निवेशयेत्। अधार्मिकानां पापानामाशु पश्यन् विपर्य्ययम्। अधार्मिकानामधर्मभूतचौर्य्यादिकारिणामतएव पापानाम्। विपर्य्ययं धनविनाशम्। अयमर्थः। यद्यपि चौर्य्यादिकारिणो धनवन्तो भवन्ति तथापि तेषां धनविनाशोऽपि शीघ्रमेव दृश्यते इति।

नाधर्म्मश्चरितो लोके सद्यः फलति गौरिव। शनैरावर्त्तमानस्तु कर्त्तुर्मूलानि कृन्तति। गौरिवेति साधर्म्यवैधर्म्याभ्यां दृष्टान्तः। तत्र, यथा गौर्भूमिरुप्तबीजा न तदानीमेव फलति किन्तु कालवशेन तादृशं वैदिकं प्रतिषिद्धञ्च कर्म्मेति साधर्म्येण। वैधर्म्येण खल्वपि। यथा गौः पशुर्वाहदोहाभ्यां सद्यः फलति नैवं वैदिकं प्रतिषिद्धञ्च कर्म्म। शास्त्रं हि धर्माधर्म्मयोः सुखदुःखफलसंबन्धं बोधयत् पुरुषस्य प्रवृत्तिनिवृत्त्योर्व्याप्रियते न तु कालविशेषमप्याक्षिपति तत्र तस्यौदासीन्यात्। शनैरावर्त्त्यमानः कालेनोपचीयमानस्त्वधर्म्मः कर्त्तुर्मूलानि छिनत्ति।

यदि नात्मनि पुत्त्रेषु न चेत् पुत्त्रेषु नप्तृषु। न त्वेव तु कृतोऽधर्मः कर्त्तुर्भवति निष्फलः। अधर्म्मेणैधते तावत्ततो भद्राणि पश्यति। ततः सपत्नान् जयति समूलस्तु विनश्यति। यदि नात्मनीत्यादेरयमर्थः। यदि बलवत्पुण्यशालिन्यात्मनि अधर्मः फलमुत्पादयितुं न शक्नोति तदा तादृशपुण्यशून्येषु पुत्त्रेषु फलन् पितुः पीड़ामावहति। तदेवमात्मनोवधादिदौर्गत्यमधर्म्मो यद्यपि न करोति तथापि पुत्त्रेषु तत् कृत्वा पितुः पीड़ामुत्पादयत्येवेत्यत्नम।

न च शास्त्रदेशितस्य फलस्य कर्त्तृगामित्वात् पितृकृतस्य कर्मणः फलं कथं पुत्त्रे भवितुमर्हति अन्यथाऽकृताभ्यागमप्रसङ्गादिति वाच्यम्। पुत्त्रस्यापि पूर्व्वकृतदुरितानुबन्धात्तदुपपत्तेः। किञ्च शास्त्रदेशितं फलमनुष्ठातरीति नायमेकान्तः। तथात्वे पित्रनुष्ठितेन वैश्वानरचरुणा पुत्रस्य फलं न स्यात्। अथ तत्र, यस्मिन् जाते एतामिष्टिं निर्वपति पूतएव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवतीति श्रुतौ फलस्य पुत्त्रगतत्वाभिधानात्तथेति चेत्। प्रकृतेऽपि मनुवचनप्रामाण्यात्तथाऽस्तु। नास्ति वचनस्यातिभार इति हि शास्त्रतात्पर्य्यविदां समयः। किञ्च दृष्टमर्थमभिसन्धायाधर्ममाचरतो दृष्टमनर्थमुपन्यस्य तन्निवृत्त्युपदेशोऽयम्। इत्थमनिष्टफलोऽयमधर्मो यत्र परमात्मनि यावत् पुत्त्रादिष्वप्यनिष्टं करोति न जातुचिदपि निष्फलो भवतीति सर्वथाऽसौ नाचरितव्य इत्यत्र तात्पर्य्यम्।

परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ। धर्मं चाप्यसुखोदर्कं लोकविक्रुष्टमेव च। धर्मवर्जितौ धर्मविरोधिनौ। असुखोदर्कं यथा बहुकुटुम्बस्य सर्वस्वदानमित्येवमादि। लोकविक्रुष्टं यथा नियोगधर्म्मः। यथा वा, यः कश्चिदनाथां तरुणीं कारुण्याद्बिभर्त्ति तत्रापि यदि लोको विक्रोशति तदा तदपि न कुर्य्यात्। एवमन्यदप्यूह्यम्। प्रत्यक्षश्रुतिविहितस्य तु स्मृत्या बाधो न न्याय्य इति मेधातिथिः। न पाणिपादचपलो न नेत्रचपलोऽनृजुः। न स्याद्वाक्चपलश्चैव न परद्रोहकर्मधीः। परद्रोहार्थं कर्म धियं च न कुर्य्यात्। येनास्य पितरो याता येन याताः पितामहाः। तेन यायात् सतां मार्गं तेन गच्छन्न रिष्यते।

ननु यदि निर्मूलः पित्रादिभिरनुगतो मार्गः सतां मार्ग-

एवासौ न भवति तस्य धर्मत्वानुपपत्तेः। अथास्ति मूलमविशेषादस्यापि भविष्यति किं पित्राद्यनुगमनोपदेशेन। उच्यते। अविदुषां मूलमजानानामुपदेशोऽयं येन मार्गेण पित्रादयो यातास्तेन सतां मार्गं यायादिति। विकल्पितेषु चार्थेषु पित्राद्याचरितोऽर्थः समाचरितव्य इति। अन्ये तु, यत्र निपुणतोऽपि निरूप्यमाणे सन्देहो नापैति उभयथा वाक्यार्थोपपत्तेस्तत्र विकल्पितपदार्थेषु वा पित्राद्याचरितः पन्था आश्रयणीय इत्याहुः। तच्चिन्त्यम्। यतो न खलु नित्यसन्दिग्धं प्रमाणं नाम सम्भवति। अवश्यं ह्येकार्थपरेण वाक्येन भवितव्यम्। सोऽयं प्रतिपत्तुरपराधो न वाक्यस्य। तथाचोक्तं, न ह्ययं स्थाणोरपराधो यदेनमन्धो न पश्यतीति। अथायमभिप्रायः स्वयं वाक्यार्थमवधारयितुमशक्तस्यायमुपायोपदेशो धर्म्माचरणे इति। तदाऽस्मन्मतानुप्रवेशः। अथाप्युभयथाऽपि वाक्यार्थोपपत्तिः प्रामाणिकी, तर्हि विकल्पित एवार्थो भवतीति विकल्पितार्थपरतया कल्पान्तरोपन्यासो न करणीयो भवति। सतां मार्गमित्यनेनैतदपि दर्शयति, यत् पितरः पितामहाश्च कुतश्चित् प्रमादादधर्ममाचरितवन्त इति नात्मनाऽप्यधर्माचारिणा भवितव्यमिति।

ऋत्विक्पुरोहिताचार्य्यैर्मातुलातिथिसंश्रितैः। बालवृद्धातुरैर्वैद्यैर्ज्ञातिसंबन्धिबान्धवैः। मातापितृभ्यां यामीभिर्भ्रात्रा पुत्रेण भार्य्यया। दुहित्रा दासवर्गेण विवादं न समाचरेत्। ऋत्विक् वैतानिककर्म्मकर्त्ता। पुरोहितः गृह्यकर्म्मशान्तिकादिकर्त्ता। आचार्य्यः उपनयनपूर्व्वकं सकल्पसरहस्यवेदाध्यापयिता। संश्रिता आश्रिता उपजीविनः। वैद्या विद्वांसो भिषजो वा। ज्ञातयः पितृपक्षाः। संबन्धिनो वैवाह्याः। बान्धवा-

मातृपक्षाः। यामयः स्वसारः कुलस्त्रियश्च। भ्राता ज्येष्ठः समः पिता भार्य्या पुत्त्रः स्वका तनुः। छाया स्वो दासवर्गश्च दुहिता कृपणं परम्। तस्मादेतैरधिक्षिप्तः सहेतासंज्वरः सदा। अधिक्षिप्तः परुषवचनेनाक्रुष्टः। असंज्वरोऽसन्तापः।

यमान् सेवेत सततं न नित्यं नियमान् बुधः। यमान् पतत्यकुर्व्वाणो नियमान् केवलान् भजन्। सततं यमान् सेवेत केवलान् नियमानेव न सेवेत। नानेन नियमसेवा निवार्य्यते नियमस्यापि शास्त्रीयत्वात् किन्तु यमसेवायां गौरवं प्राप्यते। यमा नियमाश्च मनुभाष्ये दर्शिताः। यथा। अहिंसा सत्यवचनं ब्रह्मचर्य्यमकल्कता। अस्तेयमपि पञ्चैते यमाश्चैव व्रतानि च। अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम्। अप्रमादश्च नियमाः पञ्चैवोपव्रतानि च। कल्कोदम्भः। याज्ञवल्क्यस्त्वन्यथैव स्मरति। ब्रह्मचर्य्यं दया क्षान्तिर्ध्यानं सत्यमकल्कता। अहिंसाऽस्तेयमाधुर्य्ये दमश्चेति यमाः स्मृताः। स्नानं मौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः। नियमा गुरुशुश्रूषाशौचाक्रोधाप्रमादताः। अन्ये तु, प्रतिषेधार्थका यमाः नियमाश्चानुष्ठेयरूपा इत्याहुः।

मनुः। न विस्मयेत तपसा वदेदिष्ट्वा च नानृतम्। नार्त्तोऽप्यपवदेद्विप्रान् न दत्त्वा परिकीर्त्तयेत्। यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात्। आयुर्व्विप्रापवादेन दानञ्च परिकीर्त्तनात्। यद्यप्यनृतवदनं सर्व्वदैव प्रतिषिद्धं, तथापि स्नातकव्रतत्वार्थमिहोपन्यासः। तत्रापि पूर्व्वं सत्यवदनं इदानीन्त्विष्ट्वाऽनृतं न वक्तव्यमित्येतदुच्यते। वैगुण्यञ्च तस्य यज्ञादीनामनृतवदने भवतीति।

धर्म्मं शनैः संचिनुयाद्वल्मीकमिव पुत्तिकाः। परलोकसहायार्थं सर्व्वभूतान्यपीड़यन्। नामुत्र हि सहायार्थं पिता माता

च तिष्ठतः। न पुत्रदारं न ज्ञातिर्धर्म्मस्तिष्ठति केवलः। एकः प्रजायते जन्तुरेक एव प्रलीयते। एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम्। मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ। विमुखा-बान्धवा यान्ति धर्मस्तमनुगच्छति। तस्माद्धर्मं सहायार्थं नित्यं संचिनुयाच्छनैः। धर्मेण हि सहायेन तमस्तरति दुस्तरम्। उत्तमैरुत्तमैर्नित्यं संबन्धानाचरेत् सह। निनीषुः कुलमुत्कर्षम-धमानधमांस्त्यजेत्। दृढ़कारो मृदुर्दान्तः क्रूराचारैरसंवसन्। अहिंस्रोदमदानाभ्यां जयेत् स्वर्गं तथाव्रतः। दृढ़कारी प्रारब्ध-समापयिता। मृदुरनिष्ठुरः। दान्तः शीतोष्णादिद्वन्द्वसहिष्णुः। क्रूराचाराः स्तेनादयः। तथाव्रतः निश्चितव्रतः, इदं व्रतं धार-यन्निति मेधातिथिः।

एधोदकं मूलफलमन्नमभ्युद्यतं च यत्। सर्वतः प्रतिगृह्णीया-न्मध्वथाभयदक्षिणाम्। आहृताभ्युद्यतां भिक्षां पुरस्तादप्रचो-दिताम्। मेने प्रजापतिर्ग्राह्यामपि दुष्कृतकर्म्मणः। अभ्युद्यत-मभिमुखमुपनीतमयाचितोपनीतमित्येतत्। मधु माक्षिकम्। अभयमात्मत्राणं तद्दक्षिणेव प्रीतिहेतुत्वात्। आहृतां सम्प्रदान-देशमानीताम्, अभ्युद्यताम् अभिमुखं स्थापिताम्। पुरस्ताद-प्रचोदिताम् अयाचितां दात्रा च तुभ्यमिदं दास्यामीति पूर्वम-कथिताम्। भिक्षामिव भिक्षाम्। प्रशंसार्थं भिक्षाशब्दप्रयोगः। यतिधर्मे उशना। भिक्षाऽशनमनुद्योगात् प्राक् केनाप्यनिमन्त्रि-तम्। अयाचितन्तु तद्भैक्षं भोक्तव्यं मनुरब्रवीत्। विशेषमाह-याज्ञवल्क्यः। अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः। अन्यत्र कुलटाषण्डपतितेभ्योद्विषस्तथा। कुलमटतीति कुलटा। यद्यपि सर्वैव स्त्री कुलमटति तथापि या कुलं कुलमटति सैवमुच्यते।

मनुः । शय्यां गृहान् कुशान् गन्धानपः पुष्पं मणीन् दधि । धाना मत्स्यान् पयो मांसं शाकं चैव न निर्णुदेत् । धाना भृष्टयवान् । न निर्णुदेत् न प्रत्याचक्षीत । अनाहूतान्यप्येतानि न प्रत्याख्येयानीत्यर्थः । गुरून् भृत्यांश्चोज्जिहीर्षन्नर्चिष्यन् देवताऽतिथीन् । सर्वतः प्रतिगृह्णीयान्न तु तृप्येत् स्वयं ततः । भृत्या अवश्यं भरणीयाः, वृद्धौ च मातापितरौ साध्वी भार्य्या सुतः शिशुः । अप्यकार्य्यशतं कृत्वा भर्त्तव्या मनुरब्रवीदित्युक्तलक्षणाः । उज्जिहीर्षन् क्षुधाऽवसन्नानुद्धर्त्तुमिच्छन् । तदर्थमेवायं सर्वतः प्रतिग्रहो न तु स्वतृप्त्यर्थम् । सोऽयं स्नातकव्रतकल्पः । अतएव, सर्वतः प्रतिगृह्णीयाद्ब्राह्मणस्त्वनयं गतः । पवित्रं दुष्यतीत्येतद्धर्म्मतो नोपपद्यते । नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात् । दोषोभवति विप्राणां ज्वलनाम्बुसमा हि ते इति मानवीयं वचनद्वयमपि सङ्गच्छते ।

गुरुषु त्वभ्यतीतेषु विना वा तैर्गृहे वसन् । आत्मनो वृत्तिमन्विच्छन् गृह्णीयात् साधुतः सदा । अभ्यतीतेषु मृतेषु । तैर्जीवद्भिर्गुरुभिर्विना । यदा ते पृथग्वसन्ति तदेत्यर्थः । योऽन्यथा सन्तमात्मानमन्यथा सत्सु भाषते । स पापकृत्तमो लोके स्तेन आत्मापहारकः । वाच्यर्था नियताः सर्वे वाङ्मूला वाग्विनिःसृताः । तान्तु यः स्तेनयेद्वाचं स सर्वस्तेयकृन्नरः । शब्दार्थसंबन्धस्य नित्यत्वात् अर्था वाचि नियताः नित्यसंबन्धाः । शब्दमूलत्वादर्थप्रतिपत्तेरर्था वाङ्मूला उच्यन्ते । एवमर्थाः शब्देभ्योऽवगम्यानुष्ठीयन्ते इति वाग्विनिःसृतत्वमर्थानाम् । तदनेन वाचमेव स्तौति । यः खल्वन्यथा संगच्छतेऽन्यथा च वक्ति, स वाचं स्तेनयतीत्युच्यते ।

महर्षिपितृदेवानां गत्वाऽऽनृण्यं यथाविधि । पुत्रे सर्वं समा-

सज्य वसेन्माध्यस्थ्यमाश्रितः। स्वाध्यायप्रजायज्ञैर्महर्षिपितृदेवा-नामानृण्यं प्राप्य सर्वं गृहकुटुम्बकृत्यं पुत्रे समासज्य माध्यस्थ्य-माश्रितो गृहे वसेत्। माध्यस्थ्यमौदासीन्यम्। एकाकी चिन्तये-न्नित्यं विविक्ते हितमात्मनः। एकाकी चिन्तयानो हि परं श्रेयोऽधिगच्छति। परं श्रेयोऽपवर्गः। अत्र चिन्ताया अप-वर्गफलत्वकथनात् पूर्वश्लोके च माध्यस्थ्योपदेशात् आत्मनोहित-मुपनिषदुपदिष्टब्रह्मविद्यालक्षणं चिन्तयेदित्ययमर्थः। अन्यानि स्नातकव्रतानि पञ्चमहायज्ञादीन्यन्यत्रावगन्तव्यानि विस्तरभया-न्नेह प्रस्तूयन्ते।

एषोदिता गृहस्थस्य वृत्तिर्विप्रस्य शाश्वती। स्नातकव्रत-कल्पश्च सत्त्वशुद्धिकरः शुभः। विप्रग्रहणाद्ब्राह्मणस्यैव स्नातक-व्रतमिति मेधातिथिः। पारस्करस्त्वाह। स्नातस्य यमान् वक्ष्यामः, कामादितरः। स्नातस्य कृतसमावर्त्तनस्नानस्य द्विजातेः, यमान् व्रतानि। इतरः स्नानसंबन्धशून्यः शूद्रः कामादिच्छातो यमेष्वधि-क्रियते इति तद्भाष्येषु व्याख्यातम्। एवञ्च विप्रस्येति वृत्त्यै-वान्वेति न स्नातकव्रतेन। अनन्वयिव्यवधानेनासत्तिविरहात्। स्नातकत्वस्य त्रैवर्णिकसाधारण्याच्चेति युक्तमुत्पश्यामः।

अत्रोपक्रमे व्रतानां स्वर्ग्यायुष्ययशस्यत्वाभिधानादुपसंहारेऽपि वृत्तिः शाश्वती नित्या स्नातकव्रतकल्पश्च सत्त्वस्यात्मगुणविशेषस्य शुद्धिकर इत्युक्तेः स्नातकव्रतानां काम्यत्वमवगम्यते। न च स्नातकव्रतानामनित्यत्वे तल्लोपे, वेदोदितानां नित्यानां कर्मणां समतिक्रमे। स्नातकव्रतलोपे च प्रायश्चित्तमभोजनमिति मनूक्तं प्रायश्चित्तं कथं सङ्गच्छते इति वाच्यम्। व्रतमाचरतस्तल्लोपे प्रायश्चित्तविधानोपपत्तेः। स्नातकव्रतमध्ये उपाकरणपूर्वक-

वेदाध्ययनोपदेशात् स्नातकस्याप्यध्ययनमस्तीति प्रतीयते। तथा च निर्णयसिन्धौ सत्यव्रतः। अनधीत्य द्विजो वेदं स्नात्वोद्वाह्य यथा तथा। अधीते ब्रह्मचर्य्येण साङ्गं वेदं गुरोर्गृहे।

अत्र च स्नातकव्रतमध्ये पठितेषु नेचेतोद्यन्तमादित्यमित्येवमादिषु नोद्यदादित्येक्षणस्य प्रतिषेधः, तस्याननुष्ठेयत्वात् व्रतस्य चानुष्ठेयत्वात्। किन्तु पर्य्युदासवृत्त्याऽनीक्षणं विधीयते। अनीक्षणं चेक्षणादन्यत्। तदपि तत्संकल्पपर्य्यवसायि। ततश्च व्रतशब्दस्यानुष्ठेये प्रसिद्धत्वात् उद्यदादित्यस्यानीक्षणसङ्कल्परूपो नियमः कर्त्तव्यतयोच्यते। तस्य च पालनम्। तेनाकृतसङ्कल्प उद्यन्तमादित्यमीक्षमाणोऽपि नातिक्रामति विधिम्। अदर्शनसङ्कल्पस्य कर्त्तव्यतयोपदेशेन तद्दर्शनस्यानिषिद्धत्वात्। व्रतन्तु न भवतीति। एवमन्यत्रापि। न च यत्रादित्यस्य दर्शनं विहितं तत्रोद्यतोऽस्तं यतश्च पर्य्युदासोऽस्त्विति वाच्यम्। प्रकरणभेदात्। तथात्वे वाक्यस्य विधिशेषरूपतया विधेश्चान्यविषयतया स्नातकव्रतत्वानुपपत्तेश्च। एतेन, नेचेतोद्यन्तमादित्यमित्यादौ रागप्राप्तस्य निषेधः नातिप्रगे नातिसायमित्यत्र भोजनकालपर्य्युदास इति तत्त्वकारोक्तं चिन्तनीयम्। किञ्चैवमुभयत्रैव निषेधः पर्य्युदासोवा स्यात् विशेषहेत्वभावात्।

न चैवं न कलञ्जं भक्षयेदित्यत्राप्यभक्षणं कुतो न विधीयते इति वाच्यम्। तस्य व्रतत्वे प्रमाणाभावान्निर्बीजलक्षणाऽऽपत्तेः। तस्मात्तत्र भक्षणकर्त्तव्यता प्रतिषिध्यते न त्वभक्षणं विधीयते। प्रतिषेधबुद्धिश्चौदासीन्यकारणम्। ततश्च ततो निवृत्तिः सिध्यति। कलञ्जं भक्षयन् खल्वतिक्रामति विधिम्। प्रतिषिद्धं हि तत्। विधिं चातिक्रामन्नपराध्यतीति। तथा च मीमांसाभाष्यकारैः

षष्ठाध्यायेऽभिहितम् । कथं पुनः प्रजापतिव्रतेषु नियमः कर्त्तव्यतया चोद्यते इति । उच्यते । तस्य व्रतमिति प्रकृत्य प्रजापतिव्रतानि समाम्नातानि । व्रतमिति च मानसं कर्म्मोच्यते इदं न करिष्यामीति यः संकल्पः । कतमत्तद्व्रतम् । नोद्यन्तमादित्यमीक्षेत इति । यथा तदीक्षणं न भवति तथा मानसो व्यापारः कर्त्तव्यः तस्य च पालनम्,—इति । इह क्रिया प्रतिषिध्यते नाक्रियोपदिश्यते । न हि कलञ्जं भक्षयन् प्रतिषेधविधिं नातिक्रामति । इह पुनरादित्यं पश्यन् नातिक्रामति विधिम् । न हि तस्य दर्शनं प्रतिषिद्धम् । नियमस्तत्रोपदिष्टः, यस्तं नियमं करोति स फलेन संबध्यते । इह तु प्रतिषिध्यते कलञ्जादि । कथमवगम्यते । नात्र तस्य व्रतमिति प्रकृत्य वचनमस्ति,—इति च । अथ यदुक्तं यत्रादित्यस्येक्षणं प्राप्तं तत्रोद्यतोऽस्तं यतश्च प्रतिषेध इति । सत्यं प्रतिषेधो न्याय्यः तथा श्रुतिरनुगृह्येत इतरथा नियमो लक्ष्येतेति । किन्त्विह नियमः शब्देन श्रूयते तस्य व्रतमिति । तेन नियम एष नोद्यन्तमादित्यमीक्षितव्य इति,—इति च चतुर्थेऽध्याये ।

भट्टवार्त्तिकेऽपि । उपक्रमे श्रुतं कर्म्मवाचि व्रतपदं यतः । तदन्वयबलात् कर्म्मविशेषोऽतोऽत्र चोद्यते । शास्त्रदीपिकान्यायमालाभाट्टचिन्तामण्यादिमीमांसाग्रन्थेष्वेवमेव । प्रजापतिव्रतन्यायेन पर्य्युदासवृत्त्या ईक्षणापासनसंकल्पलक्षणया तद्विषयो विधिः स्यात् । तथा च प्रसज्यप्रतिषेधो दत्तजलाञ्जलिः प्रसज्येत । न च सति सम्भवे लक्षणा न्याय्या । नेक्षेतोद्यन्तमित्यादौ तु तस्य व्रतमित्यधिकारात् प्रसज्यप्रतिषेधासम्भवेन पर्य्युदासवृत्त्याऽनीक्षणसंकल्पलक्षणा युक्तेति चोत्तरमीमांसायां वाचस्पतिमिश्राः । वृद्धाश्च मेधातिथिप्रभृतय एवमेव प्रतिपन्नाः । तत्त्वतस्तु, न सङ्कल्पो

व्रतं किन्त्वेतादृशेतिकर्त्तव्यताकसङ्कल्पविषयोव्रतमित्याहुः । तच्चिन्त्यम् । यच्च, व्रते संङ्कल्पविधानाच्च सङ्कल्पोव्रतमित्युक्तम् । तदपि चिन्त्यम् । व्रते विहितस्य सङ्कल्पस्याभिलापरूपत्वात् । न खल्वभिलापरूपः सङ्कल्पो व्रतमित्याचार्य्यैरुक्तं किन्तु अनेनैवं मया कर्त्तव्यमित्यादि मानसव्यापाररूप एवेति । तत्त्वक्षतामेव तु, तादृशेतिकर्त्तव्यताकसङ्कल्पविषयस्य व्रतत्वमभ्युपगच्छतां व्रते सङ्कल्पविधानमनुपपन्नं स्यात् । यदपि, सङ्कल्पमूलः कामो-वै यज्ञाः सङ्कल्पसम्भवाः । व्रतानियमधर्म्माश्च सर्वे सङ्कल्पजाः स्मृता इति मनुवचने व्रतानां सङ्कल्पप्रभवत्वोक्तेन सङ्कल्पो-व्रतमित्युक्तम् । तदपि चिन्त्यम् । यतस्तत्र सङ्कल्पशब्दो नाभि-लापमाचष्टे किन्त्विष्टसाधनताज्ञानं कामस्त्विच्छेति मेधातिथि-गोविन्दराजकुल्लूकभट्टादिभिर्व्याख्यातम् । एतच्च स्वयमप्युररी-कृतम् । तथाविधसङ्कल्पप्रभवत्वन्तु न परं व्रतानां किन्तु सर्व-स्यैव पदार्थस्य । चिकीर्षेष्टसाधनताज्ञानाभ्यां विना कस्याप्य-नुष्ठानासम्भवात् । अतएवोक्तं, सर्व्वे सङ्कल्पजाः स्मृता इति ।

यदपि, एकादश्यां न भुञ्जीत व्रतमेतद्धि वैष्णवमिति वचनम् । तस्यापि प्रजापतिव्रतन्यायेनाभोजनसङ्कल्पपरत्वमवश्यं वाच्यम् । भोजनप्रतिषेधस्याननुष्ठेयत्वेन व्रतत्वानुपपत्तेः । अतएव, निषेधे व्रतपदाप्रयोगाच्चेति जीमूतवाहन आहस्म । एवमन्या-न्यपि वचनानि व्याख्येयानि । एतेन, नेक्षेतोद्यन्तमादित्य-मित्यादावभावरूपं व्रतमिति, भावरूपाङ्गानुपलब्धेतो निषेधो-धर्म्मोव्रतश्चेति च तत्त्वकारोक्तं चिन्तनीयम् । विषयमात्रानन्-ष्ठानाधीनसिद्धत्वान्निषेधनियोगानामितिकर्त्तव्यताकाङ्क्षाविरहा-दिति स्वाभ्युपगमविरोधस्यैवमवर्जनीयः स्यात् । एवं, नोपरक्त-

मित्यनेनोपरक्तस्यादित्यस्यानोत्तणं स्नातकव्रतम् । चन्द्रे वा यदि वा सूर्य्ये दृष्टे राहौ महाग्रहे । अक्षयं कथितं पुण्यं तत्राप्यर्के विशेषत इति मार्कण्डेयपुराणोक्तमुपरक्तार्कदर्शनफलमन्यविषयम् । यानि तु भावरूपाणि व्रतान्युक्तानि तेषां स्वतएव व्रतत्वोपपत्तेर्न तत्रार्थान्तरं कल्पयितव्यमित्येके । अतएव तेषु तेषु कर्म्मसु व्रतपद-प्रयोगोमुनीनामाञ्जस्येनोपपद्यते । अन्येतु तत्रापि संकल्पं लक्ष-यन्ति । तेषां व्रतविषये व्रतपदप्रयोगो भक्त्योपपादनीय इत्यास्तां विस्तरः ।

अथ स्त्रीधर्म्माः । याज्ञवल्क्यः । संयतोपस्करा दक्षा हृष्टा व्यय-पराङ्मुखी । कुर्य्याच्छ्वशुरयोः पादवन्दनं भर्त्तृतत्परा । संयतो-यथास्थानमवस्थापित उपस्करो गृहोपकरणवर्गो यया सा तथा । यथोलूखलमुषलयोः कण्डनस्थाने, दृषदुपलयोः पेषण-स्थाने इत्यादि । तथा, स्त्रीभिर्भर्त्तृवचः कार्य्यमेष धर्म्मः परः स्त्रियाः । आ शुद्धेः संप्रतीक्ष्यो हि महापातकदूषितः । महा-पातकदूषितो भर्त्ता शुद्धिपर्य्यन्तं प्रतीक्षणीयः । विष्णुः । अथ स्त्रीणां धर्म्माः, भर्त्तुः समानव्रतचारित्वं श्वश्रूश्वशुरगुरुदेवताऽ-तिथिपूजनं सुसंस्कृतोपस्करता अमुक्तहस्तता सुगुप्तभाण्डता मूलक्रियास्वनभिरतिः मङ्गलाचारतत्परा । मूलक्रिया वशी-करणादि ।

अत्रिः । जीवद्भर्त्तरि या नारी उपोष्य व्रतचारिणी । आयुः संह-रते पत्युः सा नारी नरकं व्रजेत् । तीर्थस्नानार्थिनी नारी पति-पादोदकं पिबेत् । शङ्करस्यापि विष्णोर्वा प्रयाति परमं पदम् । विष्णुः । पत्यौ जीवति या योषिदुपवासव्रतं चरेत् । आयुः सा हरते पत्युर्नरकं चैव गच्छति । मनुः । नास्ति स्त्रीणां पृथग्यज्ञो न

व्रतं नाप्युपोषितम्। पतिं शुश्रूषते येन तेन स्वर्गे महीयते। स्कान्दे। नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम्। पतिशुश्रूषयैवैता लोकानिष्टान् व्रजन्ति हि। यद्देवेभ्यो यच्च पित्रादिकेभ्यः कुर्य्याद्भर्त्ताऽभ्यर्च्चनं सत्क्रियाञ्च। तस्यार्द्धं वै सा फलं नान्यचित्ता नारी भुङ्क्ते भर्त्तृशुश्रूषयैव। महाभारते। पतिमत्याः स्त्रिया लोके धर्मः पत्यर्च्चनन्त्विति। अत्रिः। न व्रतेनोपवासेन धर्मेण विविधेन च। नारी स्वर्गमवाप्नोति प्राप्नोति पतिपूजनात्। भर्त्रनुज्ञया तु न दोषः। न व्रतोपवासनियमेज्यादानं स्त्रीणामन्यत्र पतिशुश्रूषायाः कामन्तु भर्त्रनुज्ञया व्रतोपवासनियमेज्यादीनामभ्यासः स्त्रीधर्म इति शङ्खलिखितस्मरणात्। आदित्यपुराणे। नारी खल्वननुज्ञाता भर्त्रा वाऽपि सुतेन वा। विफलं तद्भवेत्तस्माद् यत्करोत्यौर्द्धदेहिकम्। और्द्धदेहिकं पारलौकिकम्। प्रायश्चित्तमाधवीये मार्कण्डेयः। नारी खल्वननुज्ञाता पित्रा भर्त्रा सुतेन वा। निष्फलन्तु भवेत्तस्या यत् करोति व्रतादिकम्। बाल्ये पित्रा यौवने भर्त्रा वार्द्धके पुत्त्रेणेत्ययं विभागो द्रष्टव्यः। पिता रक्षति कौमारे भर्त्ता रक्षति यौवने। पुत्त्रः स्थविरभावे तु न स्त्री स्वातन्त्र्यमर्हतीति स्मरणात्। कात्यायनः। भार्य्या पत्युर्मतेनैव व्रतादीनाचरेत् सदा। एवञ्च, जपस्तपस्तीर्थयात्रा प्रव्रज्या मन्त्रसाधनम्। देवताऽऽराधनं चैव स्त्रीशूद्रपतनानि षट् इत्यत्रिवाक्यमननुज्ञातविषयम्। प्रव्रज्यायान्तु विकल्पः। तदधिकारे, स्त्रीणां चैके इति बौधायनस्मरणात्।

उपवासादौ विशेषमाह व्रतखण्डे भविष्यपुराणम्। अञ्जनञ्च सताम्बूलं कुङ्कुमं रक्तवाससी। धारयेत् सोपवासाऽपि अवैधव्यकरं यतः। विधवा यतिमार्गेण कुमारी वा यदृच्छया। मदनरत्ने

व्यासः। दन्तधावनपुष्पादि व्रतेऽप्यस्या न दुष्यति। विष्णुधर्मे। सर्वेषु तूपवासेषु पुमान् वाऽथ सुवासिनी। धारयेद्रक्तवस्त्राणि कुसुमानि सितानि च। विधवा शुक्लवसनमेकमेव हि धारयेत्। सुवासिनी नवोढ़ा स्त्री स्नुषा दुहिता चेति मेधातिथिः। जीवच्छ्वशुरा जीवत्पितृका च प्रसूताऽपि सुवासिनीत्यन्ये। मदनरत्ने। अश्रुप्रपातो रोषश्च कलहस्य कृतिस्तथा। उपवासाद्व्रताद्वाऽपि सद्यो भ्रंशयति स्त्रियम्।

मत्स्यपुराणम्। धारयेदथ रक्तानि नारी चेत् पतिसंयुता। विधवा तु न रक्तानि कुमारी शुक्लवाससी। न धारयेदित्यर्थः। पत्न्याचारोपक्रमे हारीतः। स्नात्वा वाससी परिधायेति। ऋष्यशृङ्गः। गृहमेधा भवेन्नित्यं भूषणानि च पूजयेत्। नित्यस्नानकृतां वेणीमर्चयेत् पुष्पवाससा। गृहमेधा गृहकृत्यपरा, पूजयेन्मार्जनादिभिः संस्कुर्य्यात्, नित्यस्नानकृतां नित्यस्नानानन्तरकृतामिति-रत्नाकरः। पुष्पवासाऽर्चयेत्, वेण्यां पुष्पं दत्त्वा वाससा तामाच्छादयेत्। शङ्खलिखितौ। अनुज्ञाता गृहान्न निर्गच्छेत्। नानुत्तरीया। न त्वरितं व्रजेत्। न परपुरुषमभिभाषेतान्यत्र वणिक्प्रव्रजितवृद्धवैद्येभ्यः। न नाभिं दर्शयेत्। आगुल्फं वासः परिदध्यात्। न स्तनौ विवृतौ कुर्य्यात्। न हसेदपावृतम्। न भर्त्तारं तद्बन्धूंश्च द्विष्यात्। न गणिकाधूर्त्ताभिसारिणीप्रव्रजिताप्रेक्षणिकामायामूलकुहककारिकादुःशीलादिभिः सहैकत्र तिष्ठेत्। संसर्गेण हि चारित्रं दुष्यतीति।

मनुः। विशीलः कामवृत्तो वा गुणैर्व्वा परिवर्जितः। उपचर्य्यः स्त्रिया साध्व्या सततं देववत् पतिः। शङ्खलिखितौ। न भर्त्तारं द्विष्यात् यद्यप्यशीलः स्यात्पतितोऽर्थहीनो व्याधितो वाऽपि

पतिर्दैवतं स्त्रीणाम्। ब्रह्माण्डे। मानाद्द्रोषान्मत्सराद्वा भर्त्तारं याऽवमन्यते। सा सप्तजन्मकं यावत् नरके स्यान्न संशयः। मनुः। बालया वा युवत्या वा वृद्धया वाऽपि योषिता। न स्वातन्त्र्येण कर्त्तव्यं किञ्चित् कार्य्यं गृहेष्वपि। पित्रा भर्त्रा सुतेनापि नेच्छे-द्विरहमात्मनः। एतेषां विरहेण स्त्री गर्हिता स्यात् कुलद्वये। सदा प्रहृष्टया भाव्यं गृहकार्य्येषु दक्षया। सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया। यस्मै दद्यात् पिता त्वेनां भ्राता वाऽनुमते पितुः। तं शुश्रूषेत जीवन्तं संस्थितञ्च न लङ्घयेत्। संस्थितं मृतम्।

व्यासः। पत्युः पूर्वं समुत्थाय देहशुद्धिं विधाय च। उत्थाप्य शयनादीनि कृत्वा वेश्मविशोधनम्। मार्जनैर्लेपनैः प्राप्य साग्नि-शालं स्वमङ्गनम्। शोधयेदग्निकार्य्याणि स्निग्धान्युष्णेन वारिणा। प्रोक्षणैरिति तान्येव यथास्थानं प्रकल्पयेत्। द्वन्द्वपात्राणि सर्वाणि न कदाचिद्वियोजयेत्। द्वन्द्वपात्राणि दृषदुपलादीनि। शोध-यित्वा तु पात्राणि पूरयित्वा तु धारयेत्। महानसस्य पात्राणि वहिः प्रक्षाल्य सर्व्वथा। मृद्भिश्च शोधयेच्चुल्लीं तत्राग्निं विन्यसे-त्ततः। स्मृत्वा नियोगपात्राणि रसांश्च द्रविणानि च। कृत-पूर्व्वाह्णकार्य्या च श्वशुरावभिवादयेत्। ताभ्यां भर्त्रा पितृभ्यां वा भ्रातृमातुलबान्धवैः। वस्त्रालङ्काररत्नानि प्रदत्तान्येव धार-येत्। मनोवाक्कर्म्मभिः शुद्धा पतिदेशानुवर्त्तिनी। छायेवानु-गता स्वच्छा सखीव हितकर्म्मसु। दासीवादिष्टकार्य्येषु भार्य्या भर्त्तुः सदा भवेत्। देशोनिर्देशः। ततोऽन्नसाधनं कृत्वा पतये विनिवेद्य तत्। वैश्वदेवकृतैरन्नैर्भोजनीयांश्च भोजयेत्। पतिञ्चैतदनुज्ञातं शिष्टमन्नाद्यमात्मना। भुक्त्वा नयेदहःशेषमायव्ययविचिन्तया। ...कृतवैश्वदेवैः। पुनः सायं पुनः प्रातर्गृहशुद्धिं विधाय

च। कृतान्नसाधना साध्वी सुभृशं भोजयेत् पतिम्। नातितृप्त्या स्वयं भुक्त्वा गृहनीतिं विधाय च। आस्तीर्य्य साधु शयनं ततः परिचरेत् पतिम्। सुप्ते पतौ तदभ्यासे स्वपेत्तद्गतमानसा। अनग्ना चाप्रमत्ता च निष्कामा च जितेन्द्रिया। नोच्चैर्व्वदेन्न परुषं न बहून् पत्युरप्रियम्। न केनचिच्च विवदेदप्रलापविलापिनी। न चातिव्ययशीला स्यान्न धर्म्मार्थविरोधिनी। प्रमादोन्मादरोषेर्ष्यावञ्चनञ्चातिमानिताम्। पैशुन्यहिंसाविद्वेषमहाहङ्कारधूर्त्तताः। नास्तिक्यसाहसस्तेयदम्भान् साध्वी विवर्जयेत्। एवं परिचरन्ती सा पतिं परमदैवतम्। यशः शमिह यात्येव परत्र च सलोकताम्। शं मङ्गलम्। सलोकतां पत्युरेव।

काशीखण्डे। सर्पिर्लवणतैलादिक्षये चापि पतिव्रता। पतिं नास्तीति न ब्रूयादायासेर्थे नियोजयेत्। क्षयेऽपि घृतं वर्ज्जितमित्यादि वक्तव्यम्। मदनपारिजाते स्कान्दम्। प्रसुप्तन्तु सुखासीनं रममाणं यदृच्छया। अन्तरेष्वपि कार्य्येषु पतिं नोत्थापयेत् क्वचित्। अन्तरेषु प्राप्तावकाशेषु। स्त्रीधर्म्मिणी त्रिरात्रन्तु स्वमुखं नैव दर्शयेत्। स्वं वाक्यं श्रावयेन्नापि यावत् स्नाता न शुध्यति। सुस्नाता भर्त्तृवदनमीक्षेन्नान्यस्य कस्यचित्। अथवा मनसि ध्यात्वा पतिं भानुं विलोकयेत्। हरिद्रां कुङ्कुमं चैव सिन्दूरं कज्जलं तथा। कूर्पासकं च ताम्बूलं मङ्गल्याभरणं शुभम्। केशसंस्कारकबरीकरकर्णविभूषणम्। भर्त्तुरायुष्यमिच्छन्ती दूरयेन्न क्वचित् सती। कूर्पासकं चोलं कञ्चुलिकामित्येतत्। न रजक्या न हैतुक्या तथा श्रमणयाऽपि च। न च दुर्भगया वाऽपि सखित्वं कुरुते तु सा। भर्त्तृविद्वेषिणीं नारीं न सम्भाषेत कर्हिचित्। नैकाकिनी क्वचिद्भूयान्न नग्ना स्नाति वै क्वचित्। नो

मुषले न वर्द्धन्यां दृषद्यपि। न यन्त्रके न देहल्यां सती चोपविशेत् क्वचित्। उक्ता प्रत्युत्तरं दद्यादूया नारी क्रोधतत्परा। सा श्वनी जायते ग्रामे शृगाली विजने वने। अपवादो न वक्तव्यः कलहं दूरतस्त्यजेत्। गुरूणां सन्निधाने च नोच्चैर्ब्रूयान्न वा हसेत्। ताड़िता ताड़ितुं चेच्छेत् सा व्याघ्री वृषदंशिका। वृषदंशिका विड़ाली। कटाक्षैर्वीक्षते या तु भर्त्तारं कुपिता हठात्। केकराक्षी तु सा नूनं भवेद्दै नात्र संशयः। भर्त्तारं या समुत्सृज्य मिष्टमश्नाति केवलम्। ग्रामे वा शूकरी सा स्याद्गर्दभी वा स्वविड्भुजा।

वर्षभास्करे पुलस्त्यः। अविभज्य न चाश्नीयाद्देवपितृतिथिष्वपि। परिचारकवर्गेषु गोषु भिक्षुकुलेषु च। काशीखण्डे। दूरतोवर्जयेदेषा समाजोत्सवदर्शनम्। न गच्छेत्तीर्थयात्रादिविवाहप्रेक्षणादिषु। तथा, क्लीबं वा दुरवस्थं वा व्याधितं वृद्धमेव वा। सुखितं दुःखितं वाऽपि पतिमेकं न लङ्घयेत्। हृष्टा हृष्टे विसन्नास्या विसन्नास्ये प्रिये सदा। एकरूपा भवेत् पुण्या सम्पत्सु च विपत्सु च। उच्चासनं न सेवेत न व्रजेत् परवेश्मनि। तथा, वाह्यादायान्तमालोक्य त्वरिता च जलासनैः। ताम्बूलैर्व्यजनैश्चैव पादसंवाहनादिभिः। तथैव चाटुवचनैः खेदसंनोदनैः परैः। या प्रियं प्रीणयेत् प्रीता त्रिलोकी प्रीणिता तया। मितं ददाति

ग मितं भ्राता मितं सुतः। अमितस्य हि दातारं

पदा।

। भर्त्तुः सहचरी भूयाज्जीवतोऽजीवतोऽपि

ां धर्म्मतीर्थव्रतानि च। तस्मात् सर्वं परि-

वर्जयेत्। भुङ्क्ते भुक्ते पतौ नित्यमासीना चापि

वनिद्रिते विनिद्राति प्रथमं परिबुध्यते। अनलङ्कृत-

मात्मानं पत्युर्नो दर्शयेत् क्वचित्। कार्य्यार्थे प्रोषिते पत्यौ सर्व्वमण्डनवर्जिता। न च तन्नाम गृह्णीयात्तस्यायुष्यं विवर्द्धयेत्। पुरुषान्तरनामापि न गृह्णीयात् कदाचन। आक्रुष्टाऽपि न चाक्रोशेत्ताड़िताऽपि प्रसीदति। इदं कुरु कृतं स्वामिन्मन्यतामिति चोच्चरेत्। आहूता गृहकार्य्याणि त्यक्त्वा गच्छति सत्वरम्। पूजोपकरणं सर्व्वमनुक्ता साधयेत् स्वयम्। नियमोदकवर्हीषि पत्रपुष्पादिकं च यत्। सेवते भर्त्तुरुच्छिष्टमिष्टमन्नफलादिकम्। महाप्रसाद इत्युक्त्वा पतिदत्तं प्रतीच्छति।

विष्णुधर्म्मोत्तरे। मण्डनं वर्जयेन्नारी तथा प्रोषितभर्त्तृका। देवताऽऽराधनपरा तिष्ठेद्भर्त्तृहिते रता। धारयेन्मङ्गलार्थाय किञ्चिदाभरणादिकम्। न सा तु विधवावेशं कदाचिदपि धारयेत्। याज्ञवल्क्यः। क्रीड़ां शरीरसंस्कारं समाजोत्सवदर्शनम्। हास्यं परगृहे यानं त्यजेत् प्रोषितभर्त्तृका। तथा, पितृमातृसुतभ्रातृश्वश्रूश्वशुरमातुलैः। हीना न स्याद्विना भर्त्रा गर्हणीयाऽन्यथा भवेत्।

विष्णुः। मृते भर्त्तरि ब्रह्मचर्य्यं तदन्वारोहणं वा। ब्रह्मचर्य्यं मैथुनादिवर्जनम्। तदन्वारोहणं भर्त्तुः सहानुगमनम्। तथा मनुविष्णू। मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता। स्वर्गं गच्छत्यपुत्राऽपि यथा ते ब्रह्मचारिणः। ते प्रसिद्धा नैष्ठिकाः। मदन पारिजाते स्मृत्यन्तरम्। पत्यौ मृतेऽपि या योषिद्वैधव्यं

क्वचित्। सा पुनः प्राप्य भर्त्तारं स्वर्गान् लोकान

कवरीबन्धो भर्त्तृबन्धाय जायते। शिरसो

वया सदा। एकाहारः सदा क

पञ्चरात्रं वा पञ्चव्रतमथापि वा।

मथापि वा। कृच्छ्रं पराकं वा कुर्य्या।

मेन फलाहारैः शाकाहारैः पयोव्रतैः । प्राणयात्रां प्रकुर्व्वीत यावत् प्राणः स्वयं व्रजेत् । पर्य्यङ्कशायिनी नारी विधवा पातयेत् पतिम् । तस्माद्भूशयनं कार्य्यं पतिसौख्यसमीहया । नैवाङ्गोद्वर्त्तनं कार्य्यं स्त्रिया विधवया क्वचित् । गन्धद्रव्यस्य सम्भोगो नैव कार्य्यस्तया पुनः । तर्पणं प्रत्यहं कार्य्यं भर्त्तुः कुशतिलोदकैः । तत्पितुस्तत्पितुश्चैव नामगोत्रादिपूर्व्वकम् । एतदर्द्धं मदनपारिजाते नास्ति, किन्तु शुद्धितत्त्वमदनरत्नादौ लिखितम् ।

तर्पणं पुत्रपौत्राभावविषयमिति मदनपारिजातः । वस्तुतस्तु तत्कल्पनायां प्रमाणाभावात् विधवाधर्म्मतयोक्तत्वाच्च पुत्रवत्याऽपि तर्पणं कार्य्यम् । अतएव वक्ष्यमाणभगवद्वाक्ये पुत्रवत्या अपि तर्पणं श्रूयते । तथा, विष्णोस्तु पूजनं कार्य्यं पतिबुद्ध्या न चान्यथा । पतिमेव सदा ध्यायेद्विष्णुरूपधरं परम् । यद्यदिष्टतमं लोके यद्यत् पत्युः समीहितम् । तत्तद्गुणवते देयं पतिप्रीणनकाम्यया । वैशाखे कार्त्तिके माघे विशेषनियमं चरेत् । स्नानं दानं तीर्थयात्रां विष्णोर्नामग्रहं मुहुः । तथा, नाधिरोहेदनड्वाहं प्राणैः कण्ठगतैरपि । कञ्चुकं न परीदध्याद्वासो न विकृतं वसेत् । एवं धर्म्मसमायुक्ता विधवाऽपि पतिव्रता । पतिलोकानवाप्नोति न ...वेत् क्वापि दुःखिता ।

...रः । ताम्बूलाभ्यञ्जनञ्चैव कांस्यपात्रे च भोजनम् । ...े च विधवा च विवर्जयेत् । अभ्यञ्जनमञ्जो- ...न्मधु मांसञ्च गन्धं माल्यं रसान् स्त्रियः । ...णिनां चैव हिंसनम् । अभ्यङ्ग- ... कामं क्रोधं च लोभञ्च नर्त्तनं ... परिवादं तथाऽनृतम् । इत्येवमा-

दयोमन्वाद्युक्ता ब्रह्मचारिधर्म्मा यथासम्भवमत्रापि प्रतिपत्तव्याः। शुक्तं यन्मधुरं कालवशादम्लतामापन्नं, यच्च परुषनिष्ठुरं वचः शुक्तावाच इति गौतमेन निषिद्धं, सर्व्वशब्दात्तदुभयमिह निषिध्यते इति मेधातिथिः। अभ्यङ्गं घृततैलादिना स्नेहेन शिरःशरीरम्रक्षणम्। जनवादं जनैः सह वाक्कलहः। परिवादं परदोषकथनम्।

दायभागे व्यासः। मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्यव्रते स्थिता। स्नाता प्रतिदिनं दद्यात् स्वभर्त्रे सतिलाञ्जलीन्। कुर्य्याच्चानुदिनं भक्त्या देवतानाञ्च पूजनम्। विष्णोराराधनञ्चैव कुर्य्यान्नित्यमुपोषिता। दानानि विप्रमुख्येभ्यो दद्यात् पुण्यविवृद्धये। उपवासांश्च विविधान् कुर्य्यात् शास्त्रोदितान् शुभे। लोकान्तरस्थं भर्त्तारमात्मानं च वरानने। तारयत्युभयं नारी नित्यं धर्म्मपरायणा। मनुः। पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा। पतिलोकमभीप्सन्ती नाचरेत् किञ्चिदप्रियम्। कामन्तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः। न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य तु। आसीतामरणात् क्षान्ता नियता ब्रह्मचारिणी। योधर्म्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम्। एकपत्नीनामेकभर्त्तृकाणाम्। तथा, व्यभिचारात्तु भर्त्तुः स्त्री लोके प्राप्नोति निन्द्यताम्। शृगालयोनिं प्राप्नोति पापरोगैश्च पीड्यते। पतिं या नाभिचरति मनोवा देहसंयता। सा भर्त्तृलोकानाप्नोति सद्भिः साध्वीति

स्मृतिसागरे भगवद्वाक्यम्। ब्रह्मचर्य्यं
यतात्मना। पत्यौ मृते द्विजातीया सं
चित्राभरणं सर्वं सुखं भोग्यं
न भक्षेत कदाचन। अश्वमेध
अर्हणामिष्टदैवस्य कुर्य्यादहरहर्व्रत

…ग्रं …ांसञ्च ताम्बूलं कांस्यपात्रे च
…नाषञ्च विधवा परिवर्जयेत्। तदोद्धरेद्
…ा सती। तस्माद्बन्धुजनैः पुत्रैः पितृभि-
…नियस्य सदा तस्या व्रतलोपं न कारयेत्।
…न्नेषु ब्रह्मचर्य्याङ्गतया भर्त्तुरुदकं पिण्डञ्च
…ा विधवया प्रदेयमित्युक्तम्। यत्तु, पुत्रेषु विद्यमानेषु नान्यं
वै कारयेत् स्वधामिति कात्यायनवचनम्। तदेतदतिरिक्तविषय-
मनन्यगतेर्वचनात्। विद्यमानान् पुत्राननादृत्यान्यं स्वधां न कारये-
दिति वा तस्यार्थः। यदपि, संवत्सरं प्रेतपत्नी मधुमांसं विवर्जयेत्।
अधः शयीत षण्मासानिति मौद्गल्यभाषितमिति बौधायन-
वचनम्। तद्द्विजातिविधवाभिन्नपरम्। व्यवहारोऽपि तथा।

याज्ञवल्क्यः। पतिप्रियहिते युक्ता स्वाचारा संयतेन्द्रिया।
इह कीर्त्तिमवाप्नोति प्रेत्य चानुपमं सुखम्। दक्षः। अनुकूला न
वाग्दुष्टा दक्षा साध्वी प्रियंवदा। आत्मगुप्ता स्वामिभक्ता देवता
सा न मानुषी। तथा तस्यैव। अनुकूला न वाग्दुष्टा दक्षा
साध्वी पतिव्रता। एभिरेव गुणैर्युक्ता श्रीरेव स्त्री न संशयः।
हारीतः। आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा।
मृते म्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रता। शुद्धितत्त्वे
मत्स्यपुराणम्। तस्मात् साध्व्यः स्त्रियः पूज्याः सततं देववज्जनैः।
तासां राजा प्रसादेन धार्य्यते हि जगत्त्रयम्।

---

एतस्माद्बालचापल्यात् प्रीयतां परमः पिता।
आगः किञ्चिदिहोत्पन्नं यदि तत् क्षमतामपि॥
तेन प्रेरितया बुद्ध्या निबन्धोऽयं विनिर्मितः।
भर्त्तुर्निदेशवर्त्ती यः स भृत्यो नापराध्यति॥

भ्रान्तैः पुरुषधर्मत्वाद्दुर्लक्ष्य
दौर्बल्याच्चैव मद्बुद्धेर्यद्वचोऽभ
कृतश्रमाः शास्त्रतत्त्वे सुतरां
परानुग्रहसन्तुष्टाः सन्तः सं
दोषः कश्चिदिहास्तीति म
एकान्ततो यतो लोके निर्दो दुर्लभम् ॥
सत्त्वं पन्थानमालम्ब्य गतो त् स्खलद्गतिः ।
न कथञ्चन वाच्यः स्यादनुकम्प्यस्तु साधुभिः ॥
विरोधमात्रात् पूर्वेषां नोपेक्ष्यं मद्वचो बुधैः ।
तेषामपि निबन्धेषु तत्पूर्वेषां विरोधतः ॥
पक्षपातेन हि मया किञ्चिदप्यत्र नेरितम् ।
शास्त्रार्थनिर्णयायैव कृतो यत्नो यथामति ॥
गुणदोषविदः सन्तः पक्षपातपराङ्मुखाः ।
विचारयन्तु मद्वाक्यं तत्कृतेऽयं कृतोऽञ्जलिः ॥
पूर्वापरविरोधः स्खलितं तावत्स्याद्यदावस्थितम् ।
सर्वत्रैव न तेनैको वचनीयो विपश्चिताम् ॥
राधाकान्तब्रह्ममयीसूनोः कैकयवासिनः ।
परेषां परिश्रमस्याऽपि कृतिर्भूयात् सतां मुदे ॥

इति सेरपुरनगरवास्तव्यवन्द्यघटीयमहामहोपाध्यायसिद्धान्तवागीशोपनामकराधाकान्तात्मजतर्कालङ्कारोपनामकचन्द्रकान्तविरचितउद्वाहचन्द्रालोकः समाप्तः ।

---

शुभमस्तु । शिवमस्तु ॥

॥ समाप्तश्चायं ग्रन्थः ॥

